अथ हेमवीजम्—

[1]कुनटीहतकरिणा वा रविणा वा ताप्यगन्धकहतेन ।
दरदनिहितासिना वा निर्व्यूढं हेम तद्वीजम् ॥ २६६ ॥
·········वलिना व्यूढं केवलार्कमपि ॥ २६६½ ॥

अथ हेमवीजमाह—कुनटीत्यादि । कुनटी-मनःशिला तया हतो मारितो यः करी नागस्तेन कुनटीहतकरिणा, वा ताप्यगन्धकहतेन—ताप्यं-स्वर्णमाक्षिकं, गन्धकश्च ताभ्यां हतस्तेन रविणा-ताम्रेण, वा-अथवा दरदनिहतासिना-दरदेन-हिङ्गुलुना निहतो योऽसिः-लोह तेन, एभिस्त्रिभिर्व्यस्तैः समस्तैर्वा यथोपलब्धैः, हेम-सुवर्णं निर्व्यूढं-सम्यक् पुटितं, तद्वीजं-यदुक्तवीज सुवर्णसाधनाय भवतीति शेषः । केवलम्-एकम्, अर्कं-ताम्रमपि वलिना-गन्धकेन व्यूढ-पुटितं स्वर्णसाधनाय वीजं सम्पाद्यत इति भावः । केचन तु त्रिपुटमभिलपन्ति ह्यत्र ॥ २६६-२६६½ ॥

हेमवीज—मैनसिल द्वारा मारे हुए सीसे से, अथवा सोनामाखी और गन्धक से मारे हुए तावे से या हिङ्गुल से मारे हुए लोह से तीन वार सुवर्ण को पुट देने पर सुवर्ण वनाने के लिए यह स्वर्णबीज तयार हो जाता है । अथवा गन्धक से पुट दिया हुआ केवल ताम्बा भी सुवर्ण बनाने के लिए काम आता हे ॥ २६६-२६६½ ॥

अथ तारवीजम्—

[2]कुटिलं विमला तीक्ष्णं समं चूर्णं प्रकल्पयेत् ॥ २६७ ॥
पुटित पञ्चवारं तु तारे वाह्यं शनैर्धमेत् ।
यावद्दशगुणं तत्तु तारवीजं भवेच्छुभम् ॥ २६८ ॥

कुटिलमित्यादि । कुटिलं-वङ्गम्, विमला-रजतमाक्षिकं, तीक्ष्णं-लौहम्, एतेषां त्रयाणां कुटिलादीनां समं-तुल्यभागात्मकं चूर्णं प्रकल्पयेत् । पुनः पञ्चवारं हठाग्निना पुटितं तारे द्रवति सति तच्चूर्णं शनैः-मन्दं मन्दं, वाह्यं-मिश्रणीयं, यावद्दशगुणं रजततस्तेषां दशगुणं चूर्णं यावत् । पूर्वोक्त तारवीजं शुभं भवेत् ॥ २६७-२६८ ॥

तारवीज—रागा, रजतमाक्षिक और तीक्ष्ण लोह इन तीनों को समभाग लेकर, चूर्ण करे फिर ग्वारपाठे के रस की भावना देकर तीक्ष्णाग्नि से पॉच पुट देवे तो यह उत्तम रजतवीज तैयार हो जाता है । इसी को पिघली हुई चाँदी में थोडा-थोड़ा मिलाकर धीरे-धीरे मन्दाग्नि से धमन करता रहे, जव तक कि चाँदी मे दसगुना द्रव्य विलीन न हो जावे ॥ २६७-२६८ ॥

सत्त्वं तालोद्भवं वङ्गं समं कृत्वा धमेद् दृढम् ।
तच्चूर्णं वाहयेत्तारे गुणान् यावत्तु षोडश ॥ २६९ ॥
प्रतिवीजमिदं श्रेष्ठं सूतकस्य तु वन्धनम् ।
जारणात्सारणाच्चैव सहस्रांशेन विध्यति ॥ २७० ॥

सत्त्वमित्यादि । तालोद्भवं-हरितालोत्पन्नं सत्त्वं-सारः, वङ्गञ्च समं-हरितालसत्त्ववङ्गयोः समभागं कृत्वा दृढम्-अत्यर्थं धमेदग्निं भस्त्रया प्रज्वालयेत् । ततस्तारे-रजते धमन-

१ कुनटी-मनःशिला, करी नाग, रविस्ताम्रम् असिर्लोहमिति ग्रन्थकार ।
२ कुटिल वङ्ग, विमला-कास्यमाक्षिक, तीक्ष्ण लोहम्, इति ग्रन्थकार ।

योगेन द्रवीभूते सति तच्चूर्णं तयोः-हरितालसत्त्ववङ्गयोश्चूर्णं सूक्ष्मरजः षोडशगुणान् यावत् एकतोलकपरिमिते तारे षोडशतोलकपर्यन्त हरितालसत्त्ववङ्गयोश्चूर्णं वाहयेत्-मिश्रयेत्। इद-प्रागुक्तं प्रतिबीजं-बीज-रजत त प्रतिप्रक्षिप्यमाण बीजमिति। सूतस्य श्रेष्ठं बन्धनसञ्ज्ञक स्यात्। तस्य जारणात्-जारणकर्मत', सारणात्-सारणक्रियात., एवं सहस्रांशेन विध्यति। एकभागात्मकं बीज स्वमानात्सहस्रगुण तालसत्त्ववङ्गादिकं तारे परिणमयतीति भावः॥ २६९-२७०॥

प्रतिबीज—हरिताल का सत्त्व और राँगा दोनों को समान भाग लेकर अग्नि पर रखकर धौंकनी से खूब धमन करे फिर उसी चूर्ण को चाँदी से सोलह गुना अधिक लेकर पिघली हुई चाँदी में धीरे-धीरे मिलादे। हरिताल सत्त्व, राँगा और चाँदी में तीनों जब भली भाँति मिल जावें तब, यह उत्तम पारेका बन्धन करने वाला प्रतिबीज तयार हो गया-ऐसा समझना चाहिए। इसी बीज को पारे में जारण सारण किया जावे तो वह पारा सहस्रांश वेधी हो जाता है अर्थात् अपने मान से हजार गुने हरिताल सत्त्व और राँगे को चाँदी बना देता है॥ २६९-२७०॥

वङ्गाभ्रं वाहयेत्तारे गुणानि द्वादशैव तु।
एतद्बीजे समे जीर्णे शतवेधी भवेद्रसः॥ २७१॥

वङ्गाभ्रमित्यादि। वङ्गाभ्रं-वङ्गं च अभ्रकसत्त्वं च तारे-रजते पूर्वोक्तविधिना द्राविते सति द्वादशैव गुणानि-द्वादशभागानि रजत., एवेतिपदं मर्यादासूचक, वाहयेत्-समेलयेत् एतत्पूर्वोक्ते बीजे वापे समे जीर्णे सति रसः शतवेधी भवेत्। एकभागपरिमित बीजं स्वप्रमाणाच्छतगुणं वङ्गाभ्रकं रजतयतीति तात्पर्यम्॥ २७१॥

दूसरा प्रतिबीज—राँगा और अभ्रक सत्त्व को पिघली हुई चाँदी में चाँदी से बारहगुना पूर्वोक्त विधि से मिला दे तो यह भी एक दूसरा प्रतिबीज तयार होता है। इसको समभाग पारे में जारण करने पर पारा शतवेधी हो जाता है। अर्थात् बीज जारित पारद अपने मान से सौगुने वङ्गाभ्रक सत्त्व को चाँदी बना देता है॥ २७१॥

अथ हेमबीजम्—

नागाभ्रं वाहयेद्धेम्नि दिवाकरगुणं शुभम्।
प्रतिबीजमिदं श्रेष्ठं पारदस्य तु बन्धनम्॥ २७२॥

नागाभ्रमित्यादि। नागं-सीसकम्, अभ्रम्-अभ्रकसत्त्वम्, दिवाकरगुणं-द्वादशगुणितं यावच्छुभं हेम्नि-सुवर्णे द्रवीभूते सति वाहयेत्। इद पूर्वोक्त बीज प्रतिप्रक्षिप्यमाणं बीज प्रतिबीजं पारदस्य श्रेष्ठ बन्धनं भवेदिति पूर्वेणान्वय.। अत्रापि शतवेधित्व सहस्र-वेधित्वञ्चोह्यम्॥ २७२॥

हेमबीज—सीसे और अभ्रक-सत्त्व को पिघले हुए सुवर्ण में सुवर्ण से बारह गुना अधिक मिश्रण करे तो हेमप्रतिबीज तयार होता है। यह पारे के बाँधने में उत्तम माना गया है॥२७२॥

माक्षिकेण हतं ताम्रं तारं वा रञ्जयेन्मुहुः।
तं नागं वाहयेद्बीजे द्विषोडशगुणं तथा॥ २७३॥
एतद्बीजवरं श्रेष्ठं नागबीजं प्रकीर्तितम्।
समजारितमात्रेण सहस्रांशेन विध्यति॥ २७४॥

माक्षिकेणेत्यादि। माक्षिकेण हतं-स्वर्णमाक्षिकेण मारितं ताम्रं-नैपालदेशोद्भवं वा तारं-रजतम्, एतदपि माक्षिकहतं बोध्यम्। एतत्ताम्रादिकं पारदं रञ्जयेत्-राग-प्रापयेत्। क्वचित्पुस्तके 'तारं वा' इत्यत्र 'नागं च' इति पाठान्तरम्। अस्मन्मते तु तत्राऽपि 'नागे च वाहयेन्मुहुः' एतदेव युक्तं प्रतीयते तं नागमित्यादि श्लोकार्धदर्शनेन, नो चेत्स्वर्णमाक्षिकेण मारितं ताम्रं रजतं वा सीसके मिश्रयेत्तं नागं मूषामध्ये प्रक्षिप्य शनैः शनैर्धमन् सन् शतगुणं यावत्ताप्यचूर्णं प्रक्षिपन् मिश्रयेदेवं साधुरर्थः सम्पद्यते। पुनश्च तं नाग-स्वर्णमाक्षिकहतताम्रमिश्रितसीसकं मुहुः-वारंवारम्, बीजे-हेम्नि द्विषोडशगुण-द्वात्रिंशद्गुणं यावद्यथा भवेत्तथा तेन प्रकारेण वाहयेत्। एतत्पूर्वोक्तं बीजवरं सर्वेष्वपि बीजेषूत्तम नागबीजं प्रकीर्तितम्। अस्य बीजस्य समाचरितमात्रेण-सूते समानभागजारितमात्रेण, क्वचित् पुस्तके 'समाचारितमात्रेण' इति पाठान्तरमुपलभ्यते। तत्रार्थः सम्-सम्यक् आ-समन्तात् चारितमात्रेण-प्रक्षिप्तमात्रेण इति तात्पर्यम्। सहस्रांशेन विध्यति-स्वमानात्सहस्रगुणितं ताम्रादिकं सुवर्णयतीत्यर्थः। विशेषश्चात्र रसरत्नाकरे-'ताप्येन मारयेच्छुल्वं तथा गन्धेन मारितम्। तत्ताम्रं वाहयेन्नागे मूषामध्ये धमन् धमन्॥ शनैः शतगुणं यावत्ताप्यचूर्णं क्षिपन् क्षिपन्। तं नागं वाहयेत्स्वर्णे द्वात्रिंशद्गुणितं क्रमात्॥ स्वर्णशेषं तु तद्बीजं समांशं जारयेद्रसे। अनेनैव तु बीजेन सारयेज्जारयेत्पुनः॥ पूर्ववत्क्रमयोगेन-बन्धनान्तं च कारयेत्। क्रामणेन समायुक्तं सहस्रांशेन योजयेत्। चन्द्रार्कं जायते स्वर्णं देवाभरणमुत्तमम्॥' इति। तन्त्रान्तरे पक्वबीजं यथा—'स्वर्णं ताम्रं समं शुद्धं द्रावितं लेपयेत्पुनः। साम्लेन ताप्यकल्केन धमेत्स्वर्णावशेषितम्॥ एवं दशगुणं वाह्यं ताम्रं वा तुत्थसत्त्वकम्। पक्वबीजमिति स्यात स्वर्णशेषं समाहरेत्॥' इति॥ २७३-२७४॥

नागबीज—सोनामाखीसे मारा हुआ ताँबा अथवा चाँदी (किन्तु यहाँ चाँदी की जगह सीसा होना चाहिए, इसका समाधान हमने संस्कृत टीका में कर दिया है) इन दोनों ताँबे और सीसे को एक साथ मिलाकर एक जीव कर देवे। ताँबा मिला यह सीसा सुवर्ण में बार बार धमन करके सुवर्ण से बत्तीस गुने अधिक तक मिलावे तो यह उत्तम नागबीज तयार होता है। यह बीज पारे में पारद के समान भाग जारण करने पर पारा सहस्रवेधी हो जाता है।

वक्तव्य—कुछ धातुवादी तन्त्रकार तारबीज के वर्णन के पश्चात् हेमबीज का क्रम रखे हुए हैं जो कि नियोजित क्रम के प्रतिकूल जँचता है किन्तु 'आयुर्वेदप्रकाश' कार द्वारा यह क्रम अनुभवसिद्ध क्रम के अनुसार स्वीकृत किया हुआ है यह प्रगट होता है। रसार्णवकार लिखता है कि—'हेमाभ्रं चैव ताराभ्रं शुल्वाभ्रं तीक्ष्णमभ्रकम्। वङ्गाभ्रं चैव नागाभ्रं समसूतेन बन्धयेत्॥' इति। अर्थात् हेमाभ्र, ताराभ्र, ताम्राभ्र, लोहाभ्र, वङ्गाभ्र और नागाभ्र इत्यादि यह प्रायशः बीजों के जारण का क्रम रहा है। इन बीजों के सम जारण से पारद में शतांशवेधी से लेकर सहस्रांशवेधित्व शक्ति का निर्माण होता है। यह विषय आज कौतूहलकारक बना हुआ है। संशोधकों को इधर विशेष ध्यान देना चाहिए॥ २७३-२७४॥

अथ रञ्जनार्थं सारणार्थं च तैलम्—

मञ्जिष्ठा किंशुकं चैव खदिरं रक्तचन्दनम्।
करवीरं तथा दारु सरलो रजनीद्वयम्॥ २७५॥
अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु।
तैलं विपाचयेत्तेन कुर्याद्बीजादि-रञ्जनम्॥ २७६॥

मञ्जिष्ठेत्यादि । मञ्जिष्ठा-प्रतीता, किंशुक-पलाशपुष्पं, खदिरं-विख्यातं, रक्तचन्दनं-प्रसिद्ध, करवीरं-रक्ताश्वमार, दारु-देवकाष्ठं, सरल-सरलवृक्षः, रजनीद्वयं-हरिद्रा दारुहरिद्रा च, अन्यानि यथासम्प्राप्तानि रक्तपुष्पाणि-जपाबन्धुजीवपलाशकुसुम्भादिसुमनानि च पिष्ट्वा कल्कं कृत्वा, तन्मान परिभाषानुसार तैलाच्चतुर्थांशम् । तदुक्त तन्त्रान्तरे-'कल्काच्चतुर्गुणीकृत्य घृत वा तैलमेव वा । चतुर्गुणे द्रवे साध्यमि'त्यादि पुनर्लाक्षारसेन-तैलाच्चतुर्गुणितालक्तद्रवेण तैल-तिलोद्भवं, तैलपाकविधिना विपाचयेत् । तैलेन बीजादिरञ्जन-सुवर्णादीना रञ्जनसंस्कारं कुर्यात् ॥ २७५-२७६ ॥

रञ्जनतैल—मजीठ, केशूला ( पलाशपुराण ), खैर, लाल चन्दन, कनेर, देवदारु, चीड, हल्दी और दारुहल्दी तथा इनके अतिरिक्त और लालफूल जितने मिलते हैं उनमें से जो मिल सके, लेकर उन सबको पीपल की लाख के रस के साथ पीसकर तैलपाक विधि से पकावे और उससे सुवर्णादि बीजों का रञ्जन करे ॥ २७५-२७६ ॥

द्विगुण रक्तपुष्पाणां रक्तपीतगणस्य च ।
क्वाथं, चतुर्गुणं क्षीर, तैलमेक सुरेश्वरि ॥ २७७ ॥
ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीसमुद्भवम् ।
पाटलाकाकतुण्डयम्बुमहाराष्ट्रीरसैः पृथक् ॥ २७८ ॥
भेकशूकरमेषाहिमत्स्यकूर्मजलौकसाम् ।
वसया चैकया युक्त षोडशांशैः सुपेषितैः ॥ २७९ ॥
भूलतामलमाक्षीकद्वन्द्वमेलकभेषजैः ।
पाचितं गालितं चैव सारणातैलमुच्यते ॥ २८० ॥

अथ सारणार्थं तैलमाह-द्विगुणमित्यादि । रक्तपुष्पाणां-जपाबन्धुजीवपलाशकुसुम्भादीनां तथा, रक्तपीतगणस्य-रक्तवर्गोक्तद्रव्याणां पीतवर्गोक्तद्रव्याणां च तदुक्तौ रक्तपीतवर्गौ यथा रसरत्नसमुच्चये-'कुसुम्भ खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम् । अक्षीवो बन्धुजीवश्च तथा कर्पूरगन्धिनी । माक्षिकञ्चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः ॥' इति । तथा 'किंशुक' कर्णिकारश्च हरिद्राद्वितयं तथा । पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि ॥' इति । द्विगुणं-तैलाद् द्विगुणितं क्वाथ तथा क्षीरं-दुग्ध चतुर्गुणम्-तैलाच्चतुर्गुण च गृहीत्वा ततो हे सुरेश्वरि-पार्वति, एकं भागं ज्योतिष्मती, करञ्ज-पूतिकरञ्जः स्वनामख्यात., अक्षः-विभीतक', कटुतुम्बी-तिक्तालाबु., आसाम् ओषधीनां समुद्भव तैलं तैलपातनञ्च ज्योतिष्मतीबीजानि वस्त्रपूतानि कृत्वा पाटलारसेन भावयित्वा कास्यपात्रे सस्थाप्य तीक्ष्णे आतपे रक्षयेत् सन्तप्ते सति स्वच्छवस्त्रेण पीडयित्वा तैल ग्राह्यमित्येवं पृथक्-पृथग् द्रव्यरसै. । पाटला-पाटलिरिति प्रसिद्धा, काकतुण्डी-काकनासा, अम्बु-बालक, महाराष्ट्री-'महाराष्ट्र्यां च तीक्ष्णा मरहट्टिका मता,' इति शालिग्रामनिघण्टुभूषणम् । इत्येताभि ज्योतिष्मती-करञ्जाक्षकटुतुम्बीबीजाना क्रमश. पूर्वोक्तक्रियया ह्येकैकस्य तैलं पातयेत् पृथक् । यद्वा ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीबीजाना समस्ताना व्यस्तानां वा तैलं पृथगेकस्मिन् पात्रे प्रक्षिप्य पाटलादिरसैः पूर्वं पाचयित्वा ततः सारणार्थं तैलं यथोक्तविधिना साधयेदिति । यद्वा ज्योतिष्मत्यादीनां चतुर्णां मध्यादन्यतममेक किञ्चित्तैलं तस्य भागैकं, तस्माद् द्विगुणं पूर्वोक्त क्वाथं, चतुर्गुणञ्च दुग्धं पाटलादिद्रव्यचतुष्टयस्य पृथक् , तैलात् एकैक भाग रसं, भेकः-मण्डूक., शूकरः-वराह', मेषः-प्रसिद्धः, अहिः-सर्पः, मत्स्यः-प्रसिद्धः,

कूर्मः–कच्छपः, जलौका, एषां मध्यादेकस्य कस्यचिदपि जन्तोरेकभागया वसया युक्तं तैलं षोडशांशैः तैलषोडशभागपरिमितैः, भूलता–गण्डूपदः, इति ख्यातः। केचित्तु 'भूलतामलः' इत्येकं पादमामनन्ति व्याख्यानयन्ति च गण्डूपदपुरीषम्। इति। मलमाक्षीक–सिक्थं, द्वन्द्वमेलकभेषजानि–द्वन्द्वमेलापकौषधानि, यथाऽत्रैव–'ऊर्णाटङ्कणगिरिजतुमाहिषीकर्णाक्षिमलेन्द्रगोपककर्कटका द्वन्द्वमेलापकौषधानि।' इति। तैः सुपेषितैः–कृतकल्कैः सह पाचितं–साधितं चतुष्पञ्चदिनावधिरिति शेषः। ततः सिद्धमिति ज्ञात्वा चतुर्गुणेन वस्त्रेण गालितं तत्सारणातैलमुच्यते। श्रीमद्गोविन्दभगवत्पादा अपि लिखन्ति सारणातैलं यथा—'मण्डूकमत्स्यकच्छपमेषजलौकाहिशूकरादीनाम्। संयोज्यैकस्य वसां ततः पचेत्सारणातैलम्॥ ज्योतिष्मतीविभीतककरञ्जकटुतुम्बीतैलमेकस्मात्। द्विगुणितरक्तकषायं क्षीरेण चतुर्गुणेन पचेत्॥ दाडिमपलाशबन्धूककुसुमरजनीभिररुणसहिताभिः। मञ्जिष्ठालाक्षारसचन्दनसहितोऽपि रक्तवर्गोऽयम्॥ विद्रुमभूनागमलं विण्मक्षिकाध्वाङ्क्षशलभानाम्। कर्णमलं महिषीणां क्रमेण कल्कं कलांशेन॥' इति विशेषस्तन्त्रान्तरे यथा–'ज्योतिष्मतीकरञ्जाख्यं कटुतुम्बीसमुद्भवम्। तैलमेकं समादाय मण्डूकवसया समम्।' 'कूर्मशूकरमेषाहिजलौकामत्स्यजाऽपि च। एतेष्वेका वसा ग्राह्ये'ति टीकाकारः॥ 'रक्तवर्गः पीतवर्गः क्वाथ्यः क्षीरैश्चतुर्गुणैः। पुष्पाणां रक्तपीतानामनेकेषां द्रवं हरेत्॥ एतद्द्रावं द्विभागं स्यात्पूर्वक्वाथचतुष्टयम्। पातयेत्काकतुण्ड्युत्थं महाराष्ट्रीद्रवं तथा॥ प्रत्येकं भागमेकैकं पूर्वतैलं वसायुतम्। योज्य भागद्वय तत्र भूलतामलतालकम्॥ द्वन्द्वमेलापयोर्येकं तैलात्षोडशकांशकम्। प्रत्येकं योजयेत्तस्मिन् सर्वमेकत्र पाचयेत्॥ ग्राह्य तैलावशेषं तद्वस्त्रपूत सुरक्षयेत्। विख्यात सारणं तैल रसराजस्य सारणे॥' इति। द्रव्याणां तैलनिष्कासनविधिरपि रसरत्नाकरे यथा–'तैलानां पातन वक्ष्ये सूर्यपाकेन चानलात्। जलयोगेन तैलं तद्ग्रासं योगेषु योजयेत्॥ धत्तूरबीजचूर्णानि वस्त्रपूतानि कारयेत्। समूलोत्तरवारुण्याः कषायेण विलोडयेत्॥ आलिप्य कांस्यपात्रे तु धारयेदातपे खरे। संतप्ते स्वच्छवस्त्रेण पीडयेत्तैलमाहरेत्॥ शिग्रुपुष्पार्ककार्पासबीजानामपमार्जनात्। ग्राह्यं धत्तूरवत्तैलमेकैकस्य पृथक् पृथक्॥ काकतुण्ड्याः समूलाया वाकुचीतैलमाहरेत्। देवदाल्याश्च जालिन्यास्तिक्तकाकोलितो भवेत्॥ अपामार्गकषायेण तैलं स्याद्द्विपमुष्टिजम्। मूलक्वाथैः कुमार्यास्तु तैलं जैपालजं भवेत्॥' इत्यादिः॥ २७७–२८०॥

सारणा तैल—हे पार्वति, गुडहल आदि के लालफूल, कसूमा आदि रक्तगण और केशूला आदि पीतगण का क्वाथ दो भाग, दूध चार भाग और मालकागनी, पूतिकरञ्ज, बहेडा और कडवी तुम्बी का तैल एक भाग लेकर पाढल, कौआठोडी, नेत्रवाला और जलपिप्पली इनका स्वरस अलग-अलग एक-एक भाग, मेंढक, सूअर, मेंढा, साँप, मछली, कछुआ और जोंक इनकी चर्वी एक भाग तथा तैल से सोलहवाँ भाग केंचुवा, सोनामाखी और द्वन्द्वमेलक औषधियों को लेकर कल्क करके उपर्युक्त सबको मिलाकर मन्दाग्नि से पचावे। तैल शेष रहने पर उतारकर छान ले। यह सारणा तैल है।

**वक्तव्य**—पारद पर सारण संस्कार करने के लिए सारणा तैल की नितान्त आवश्यकता होती है। इस तैल के अभाव में सारण कर्म ही असमव हो जाता है अत. इसका ज्ञान अत्यन्त आवश्यक है। इसमें प्रयुक्त होनेवाले द्रव्य जैसे कि—जितने प्रकार का तैल ग्रहण किया जाता है उन ( मालकागनी, करज, बहेडा, कडवी तुम्बी, कपासबीज ( सरकी–बिनोला ), सहजने के बीज, अर्कबीज इत्यादि ) सबका परिचय तथा तैल निकालने की विधि, तैल बनाने की विधि, कल्कित द्रव्यों के साथ पाँच दिन तक मन्दाग्नि से तैल की साधना करे। तैल में प्रयुक्त होने

वाले द्रव्य-रक्तवर्ग, पीतवर्ग, लाल फूल, पीलेफूल, द्वन्द्वमेलक औषधों आदिका विस्तृत वर्णन संस्कृत टीका में दिया हुआ है ॥ २७७-२८० ॥

**अथ गन्धर्वतैलमपि रसहृदयस्वरसात् ॥ २८१ ॥**

अत्रेत्यादि । अत्र-सारणायां गन्धर्वतैलम्-एरण्डतैलमपि, योज्यमिति तात्पर्यम् । कुतो रसहृदयस्वरसात्-श्रीमद्गोविन्दभगवत्पादाचार्यविरचितरसहृदयनाम्नि तन्त्रे समुपलब्धत्वात् । तद्यथा-'ज्योतिष्मतीविभीतकगन्धर्वाणां च तैलमेकस्य । द्विगुणितरक्तकषायक्षीरेण चतुर्गुणेन पचेत् ॥' इति । तैलनिर्णयो रससारे यथा—'धूर्तभल्लातकालिङ्गविभीताङ्कोलसंभवम् । ज्योतिष्मतीतिलानां च वाकुच्यतसिबीजजम् ॥ तुम्बीपलाशजं तैलं कटुतैलं च राजिजम् । देवदाली करञ्जानामेरण्डकटुतुम्बिजम् । गृहीत्वा सर्वतैलानि यथाप्राप्तानि साधकः ॥' इति ॥ २८१ ॥

रसहृदयतन्त्रकार एरण्डतैल का भी सारणार्थ जो तैल बनता है उसमें अन्य तैलों की भाँति प्रयोग किया है। इसी प्रकार रससार के कर्ता ने धत्तूर के बीजों का तैल, भिलावे का तैल, तरबूजों के बीज का तैल, बहेडे की मज्जा का तैल, अकोल का तैल, बावची का तैल, अलसी, पलाश, राई, सरसों, कलिहारी आदि के तैलों का भी उपयोग कहा है। इसका प्रमाण संस्कृत टीका में है ॥ २८१ ॥

अथ द्वन्द्वमेलकौषधानि—

**ऊर्णाटङ्कणगिरिजतुमहिषीकर्णाक्षिमलशक्रगोपकर्कटकाः । इति ॥२८२॥**

ऊर्णेत्यादि । ऊर्णा-मेषरोमाणि, टङ्कणं ख्यातं, गिरिजतु-शिलाजतु, महिषी-विश्रुता, तस्याः श्रोत्रमलो नेत्रमलश्च, शक्रगोपः—अतीवशोणो वार्षिकः कीटविशेषः, उक्तं च—'शक्रगोपस्तु वर्षाभू रक्तवर्णेन्द्रगोपकावि'ति । कर्कटकः—कुलीरकः । इमानि सर्वाण्यपि औषधानि द्वन्द्वमेलापकानीति ॥ २८२ ॥

द्वन्द्वमेलक औषधियों के नाम—ऊन, सुहागा, शिलाजीत, भैंस के कान और नेत्र का मल, बीरबहूटी और केकड़ा हैं।

वक्तव्य—शक्रगोप-यह वर्षा के प्रारम्भ में ही देखा जाता है। लाल मखमल के समान रंग का होता है जिसको प्रचलित भाषा में बीरबहूटी नाम से पुकारा जाता है। द्वन्द्वमेलक का तात्पर्य यह है कि स्वर्ण, अभ्रकसत्त्व आदि दो-दो द्रव्यों को मिलाकर एक जीव कर देने वाले जो औषध होते हैं उनको द्वन्द्वमेलक कहा जाता है।

इन द्रव्यों को स्त्री दुग्ध के साथ घोटने से द्वन्द्वमेलापक शक्ति का निर्माण विशेष होता है ऐसा रसहृदयकार का कथन है। जैसे कि—'नारीपयसा पिष्टैः सर्वद्वन्द्वानि हि मिलन्ति ।' इति ॥ २८२ ॥

अथाऽपरम्—

**श्वेतपुष्पैर्यथाप्राप्तैर्नानावृक्षसमुद्भवैः ।**
**रसं चतुर्गुणं योज्यं कङ्गुनीतैलमध्यतः ॥ २८३ ॥**
**पचेत्तैलावशेषं तु तस्मिंस्तैले निषेचयेत् ।**
**द्रावितं तारबीजं तदेकविंशतिवारकम् ॥ २८४ ॥**

**रञ्जितं जायते सम्यग्रसराजस्य रञ्जनम् ॥ २८५ ॥**

**श्वेतपुष्पैरित्यादि । नानावृक्षसमुद्भवैः—अनेकतरुसमुत्पन्नैः, श्वेतपुष्पैः–धवलवर्णकुसुमजातैः । यथाप्राप्तैः–तथा श्वेतवर्गसमुद्भवैः कुसुमैः । श्वेतवर्गो यथा—'तगरः कुटजं कुन्दो गुञ्जा जीवन्तिका तथा । सिताम्भोरुहकन्दश्च श्वेतवर्ग उदाहृतः ॥' इति । रस–स्वरस कषायं वा चतुर्गुणं—तैलमानाच्चतुर्गुणं, कङ्गुणीतैलमध्यत—ज्योतिष्मतीतैलमध्ये, योज्यं तैलावशेषं यावत् पचेदग्निनेति शेषः । पुनस्तस्मिन् तैले द्रावितं–द्रवीभूत तारबीज रजतवापम्, एकविंशतिवारकं प्रक्षेपणं यावद्भवेत्तावन्निषेचयेत् । तद्रञ्जितं जायते—अनेन रसराजस्य सम्यग्रञ्जनं भवति ॥ २८३–२८५ ॥**

रजतबीज रञ्जनतैल—अनेक वृक्षों से मिलनेवाले सफेद फूल अथवा श्वेतवर्गोक्त वृक्षों के फूल इन सबका चार भाग रस, एक भाग मालकागनी के तैल में डालकर मन्दाग्नि से पकावे । जब तैलमात्र अवशेष रहे तब उस तैल में चाँदी को पिघलाकर २१ बार डाले । प्रत्येक प्रक्षेप के समय तैल नूतन होना चाहिए । ऐसा करने से चाँदी का रञ्जन हो जाता है । यह तारबीज पारे का रंगनेवाला होता है ।

**वक्तव्य—**पहले से रञ्जन तैलों का विषय चला था किन्तु बीच में द्वन्द्वमेलक भिन्न विषय डालकर क्रमभंग सा कर दिया और अब पुनरपि तारबीज का विषय आ गया है, ऐसा असंगत-प्रतीत होता है ? किन्तु यह सच है कि विषयान्तर नहीं केवल एक ही विषय है । द्वन्द्वमेलन के विना बीजों में समरसता और एकात्मभाव की प्राप्ति नहीं हो सकती है अत द्वन्द्वमेलक द्रव्यों का प्रतिपादन विषय से सर्वथा सम्बद्ध है ॥ २८३–२८५ ॥

अन्यच्च—

**कुटिले बलमत्यधिकं रागस्तीक्ष्णे च पन्नगे स्नेहः ।**
**रागस्नेहबलानि तु कमले नित्यं प्रशंसन्ति[१] ॥ २८६ ॥**

**अधुना तद्धातूनां जारणफलमाह—कुटिल इत्यादि । कुटिले—वङ्गे स्वभावेनैवाधिकं–प्रचुरं बल सत्त्वं भवतीति शेषः । तीक्ष्णे—लोहे अत्यधिकः—प्रभूतो रागः रञ्जन, पुनः पन्नगे-नागेऽत्यधिकः स्नेहः–स्निग्धत्वम् । अत एवैतेषु कुटिलतीक्ष्णपन्नगेषु जारितेषु सत्सु सूतो बलवान्, रागवान्, तथा स्नेहवांश्च क्रमशो भवति । पुनः कमले–ताम्रे एकस्मिन्नेव रागस्नेहबलानि त्रीण्येवोक्तानि । अत एव रसशास्त्रमर्मज्ञास्ताम्रं नित्य प्रशंसन्ति–स्तुवन्तीत्यर्थः । कुटिलतीक्ष्णपन्नगानां जारणाद्रसे यथा बलरागस्नेहा भवन्ति तथैकनाम्र जारणाद्युगपदेव त्रयो भवन्तीति भावः ॥ २८६ ॥**

धातुजारण फल—रांगे में स्वभाव से ही अधिक बल होता है, तीक्ष्ण लोह में राग (ललाई) और सीसे में स्वभाव से ही स्नेह होता है अतः इन तीनों (वङ्ग, लोह और सीसे) के पारे में जारण करने से पारद बलवान्, रागवान् और स्नेहवान् बन जाता है किन्तु ये तीनों भी गुण अकेले ताम्र में होते हैं केवल ताम्र के जारण करने से पारद में बल, राग और स्निग्धता एक साथ आती है । यही कारण है कि धातुवादी (किमियागिर) ताम्र की प्रशंसा करते हैं । वे जब ताम्र आदि से सुवर्ण बनाने में सनद्ध होते हैं तब ताम्र में उन्हें एक साथ तीनों बातें रञ्जन, स्नेहन और बल मिलते हैं जिससे उनके कार्य में प्रचुर प्रमाण में सहायता होती है यही कारण है कि वे ताम्र की सदैव प्रशंसा करते हैं ॥ २८६ ॥

---

१. शंसन्ति धातुविदः इति रसहृदये पाठः । कमले–ताम्रे ।

**बलमास्तेऽभ्रकसत्त्वे जारणरागाः प्रतिष्ठितास्तीक्ष्णे।**
**बन्धस्तु सारलोहे [1]क्रामणमथ नागवङ्गगतम् ॥ २८७ ॥**

अभ्रसत्वादीनां योगे रसे व्यवस्थामाह—बलमित्यादि। अभ्रकसत्वे—घनसत्त्वे बलमास्ते—बलं तिष्ठति। कारणानुकूलत्वात्कार्याणामितिन्यायेन पारदोऽपि तज्जारणेन बलवान् भवति। पुनश्च तीक्ष्णे—लोहविशेषे, जारणरागाः—तीक्ष्णस्था जारणे रागाश्च प्रतिष्ठिताः सन्तीत्यर्थः। अतस्तज्जारणेन पारदे रञ्जनत्वमुपपद्यते। सारलोहे—लोहजातावुद्दिष्टे विशिष्टे तीक्ष्णलोहे सुवर्णे रजते वा बन्धः—बन्धनक्रिया जायते। अथेत्यनन्तरम्। नागवङ्गगत—सूते नागे वङ्गे च जीर्णे सति। क्रामणं—क्रामणक्रियोत्पद्यते। विशेषश्चात्र—'नागे स्नेहो बलं व्योम्नि रागस्तीक्ष्णे तथैव च। बलं रागस्तथा स्नेहः कनके च व्यवस्थितः। तस्मात्कनकमेवादौ जारयेद्रससाधकः॥' इति ॥ २८७ ॥

अभ्रकसत्त्व में बल, लोहे में जारण शक्ति और रञ्जकत्व, लोहे के भेदस्वरूप सार लोह अथवा सुवर्ण, चाँदी में बाँधने की शक्ति और सीसा तथा राँगे में क्रामण करने की शक्ति होती है। अत एव अभ्रकसत्त्व, लोह, सारलोह, सुवर्ण-चाँदी, सीसा और वङ्ग आदि द्रव्य पारद में जब तक जारण नहीं किये जाते हैं तब तक पारद में बल, जारणशक्ति, रञ्जन तथा बाँधने की क्रिया का आधान नहीं हो पाता है। सीसा और राँगे के जारण के बिना क्रामण शक्ति पारद में नहीं आती है, यही कारण है कि इनकी पारद में जारणा होती है ॥ २८७ ॥

**क्रामति तीक्ष्णेन रसस्तीक्ष्णेन च जीर्यते ग्रासः।**
**हेम्नो योनिस्तीक्ष्णं रागान् गृह्णाति तीक्ष्णेन ॥ २८८ ॥**

सर्वकारणं तीक्ष्णमाह—क्रामतीत्यादि। रसस्तीक्ष्णेन—लोहभेदेन, क्रामति—क्रामणं विदधाति ताम्रादिधातून् सारणक्रियया विध्यतीत्यर्थः। पुनस्तीक्ष्णेन—तीक्ष्णलोहेन सूते ग्रासो जीर्यते। तेन च सूतो बुभुक्षितो भवतीति शेषः। हेम्न—सुवर्णस्य योनिः—उत्पत्तिस्थानं तीक्ष्णम्। अतस्तीक्ष्णेन पारदो रागान्—रञ्जनभावान् गृह्णाति ॥ २८८ ॥

पारा तीक्ष्णलोह जारणा के द्वारा क्रामण करता है अर्थात् सारणक्रिया से ताम्र आदि धातुओं को वेधकर स्वर्ण बना देता है। तीक्ष्ण लोह से ही ग्रास को जारण करने की शक्ति पारद में उत्पन्न होती है अर्थात् बुभुक्षित होता है। तीक्ष्णलोह से ही सुवर्णोत्पादक होता है क्योंकि सुवर्ण की योनि ही तीक्ष्ण लोह है। रञ्जनसंस्कार को ग्रहण करना भी तीक्ष्णलोह-जारण से ही होता है। तीक्ष्णलोह के बिना पारद में यथेच्छ राग (ललाई) नहीं आती है। अतः यह सिद्ध है कि जिनको पारद में इन सब शक्तियों का समावेश अभीष्ट है उनको पारद में तीक्ष्णलोह-जारण करना सर्वथा अनिवार्य है।

**वक्तव्य**—क्रामण संस्कार के बिना रसायन और धातुवाद के लिए किया हुआ परिश्रम निष्फल होता है। क्रामण संस्कार करने से ही पारद में वह शक्ति आती है जो बीज धातु (क्षेत्र) के अणु-परमाणु में प्रवेशित होकर अपने प्रभाव को प्रगट करता है। सारणा पर्यन्त के समस्त संस्कार करने पर भी क्रामण के बिना पारद धातुओं के बाहर ही वेष्टन करके रहेगा अर्थात् लेपवत् प्रतीत होगा किन्तु अणु-परमाणु में प्रवेश नहीं कर सकेगा। जैसे कि—'इति कृतसारणविधिरपि बलवानपि सूतराट् क्रियायोगात्। सवेष्ट्य तिष्ठति लोहं नो विशति

---

[1] 'सारणमथ नागवङ्गाभ्याम्' इति रसहृदये पाठः।

क्रामणारहितः ॥' जिस प्रकार भोजन और औषध का सेवन करने पर अनुपान के बल पर वह रस-रक्तादि धातुओं में सर्वाङ्गत व्याप्त हो जाता है उसी प्रकार क्रामण संस्कार से पारद धातुओं के अणु परमाणु में प्रवेशित हो जाता है। जैसे—'अन्नं वा द्रव्यं वा यथानुपानेन धातुषु क्रमते। एवं क्रामणयोगाद्रसराजो विशति लोहेषु ॥' (रसहृदयतन्त्र) अतः पारद के पूर्ण प्रभाव और पूर्ण सफलता के लिए क्रामण संस्कार नितान्त आवश्यक है। इसकी विस्तार-सहित विधि रसहृदयतन्त्र में देखें ॥ २८८ ॥

**तदपि च दरदेन हतं हत्वा वा माक्षिकेण रविसहितम्।**
**वासितमपि वासनया घनवच्चार्यं च जार्यं च ॥ २८९ ॥**

तीक्ष्णस्य दरदसंयोगेन गुणोत्कृष्टत्वमाह—तदपीत्यादि। अपीति निश्चयेन। तत्—तीक्ष्णाख्यं लोहं, चकारोऽत्र समुच्चयार्थे। दरदेन—हिङ्गुलुना हतम् अथवा माक्षिकेण—सुवर्णमाक्षिकेण, रविसहितं—ताम्रयुक्तं तीक्ष्णाख्यं लोहं हत्वा च वासनया—वासनाद्रव्येण वासितं—परिभावितं यदा भवेत्तदा घनवत्—अभ्रकसत्त्ववत्[1] चार्यं—चारणीयं, जार्यं—जारणीयं च ॥ २८९ ॥

उपर्युक्त तीक्ष्णलोह को हिङ्गुल से मारे अथवा ताम्रसहित लोह को सोनामाखी से मारकर काञ्जी आदि भावनाद्रव्यों से भावित कर अभ्रकसत्त्व की भाँति पारद में चारण और जारण करे। कुछ लोग 'रविसहितम्' का अर्थ 'अर्कसहितम्' अर्थात् आक के दूध के साथ हिङ्गुल और सोनामाखी से मारने को मानते हैं किन्तु व्यावहारिक और शास्त्रीय दृष्टिकोण से ताम्र ही का संयोग उत्तम और सिद्धिप्रद है ॥ २८९ ॥

**सर्वैरेभिर्लोहैर्माक्षिकमृदितैर्द्रुतैस्तथा गर्भे।**
**बिडयोगेन च जीर्णो रसराजो बन्धमुपयाति ॥ २९० ॥**

अथेदानीं रसबन्धनोपायमाह—सर्वैरित्यादि। माक्षिकमृदितैः—सुवर्णमाक्षिकसंयोगेन संपेषितैः। क्वचित् पुस्तके 'माक्षिकमृदितैः' इत्यत्र 'माक्षिकनिहतैः' इति पाठान्तरम्। एभिः प्रागुक्तैः सर्वलोहैः—धातुभिस्तथा गर्भे—रसगर्भे द्रुतैः—सम्यग् विद्रुतैः पुनश्च बिडयोगेन पूर्वोक्तबिडादिना जीर्णो—जारित एवम्भूतस्वैः सुवर्णादिधातुभी रसराजो बन्धमुपयाति।

सोनामाखी से मर्दन किये हुए पूर्वोक्त सुवर्णादि समस्त धातु तथा पारद में बिना अग्नि-संयोग के गर्भद्रुति विधि से भली भाँति द्रुत होनेपर, पहले कहे हुए बिडयोगों से जीर्ण, तीक्ष्ण लोह, स्वर्ण तथा अभ्रक सत्त्व आदि से पारद का बन्धन हो जाता है ॥ २९० ॥

आगे ग्रन्थकार ताम्र से सुवर्ण बनाने की चार विधियाँ बताता है और पारद-रञ्जन के उन नियमों की सीमा निर्धारित करता है जिनके स्वीकार करने से ही ताम्र का स्वर्णरूप में परिवर्तन होता है अन्यथा नहीं—

**निर्बीजे समजीर्णे पादोने षोडशांशतया।**
**अर्धेन पादकनकं पादेनैकेन तुल्यकनकं च ॥ २९१ ॥**

अथ ताम्रस्य सुवर्णत्वापादनमिति दर्शयन्नाह—निर्बीज इत्यादि। समजीर्णे—तुल्यसुवर्णग्रासजीर्णे सूते, अर्थात्—उदाहरणार्थं यथातोलकपरिमिते पारदे तावन्तमेव तस्मिन् स्वर्णजारणं कृतं स्यादिति। निर्बीजे—बीजरहितेऽपि ताम्रे तुल्यसुवर्णग्रासग्रसितपारदस्य

१. 'घनवदभ्रकवत्' इति ग्रन्थकारः।

संयोगः स्वप्रमाणाच्छतगुणं द्रवीभूत ताम्र स्वर्णत्वमधिरोहति। पादोने–पादोनस्वर्णग्रासजीर्णे, चतुस्तोलकमिते पारदे त्रितोलकमिते स्वर्णे जारिते सति पोडशांशतया–प्रक्षिप्तषोडशभागसुवर्णबीजेन ताम्रेण सुवर्णं सम्पद्यते अर्थात्सुवर्णस्यैकभागं द्रावितताम्रस्य च पञ्चदशभागमेवं षोडशभागपरिमिते ताम्रे पादोनस्वर्णजीर्णस्य रसस्य शतांशप्रक्षेपः सुवर्णकरो भवतीति भावः। अर्धेन–अर्धसुवर्णग्रासजीर्णेन अर्थात् द्वितोलकमिते पारदे द्व्येकतोलकपरिमिते स्वर्णे जारिते सति तेन सूतेन पादकनकं–पादपरिमितप्रक्षिप्तसुवर्णताम्र सुवर्णं जायते। अर्थात् पूर्वोक्तस्यार्धहेमजीर्णयुक्तसूतस्य त्रितोलकमिते द्रावितताम्रे चैकतोलकमिते स्वर्णे संयुक्ते शतांशप्रक्षेप. सुवर्णजनको भवति। पादेनैकेन–एकपादसुवर्णग्रासजारितेन पारदेन (अर्थात् एकतोलकपरिमित सुवर्णं त्रितोलकमिते सूते जीर्णं स्यात्तेन) तुल्यकनकम्–प्रक्षिप्तसमभागस्वर्णं ताम्रं सुवर्णं भवति। एकपादसुवर्णजारितपारदस्य शतांशप्रक्षेपणेन समभागसुवर्णद्रावितताम्र सुवर्णं भवति। अर्थात् अर्धं सुवर्णम् अर्धं च ताम्रं कृत्स्नेन सुवर्णं भवति। एकपादसुवर्णजारितसूतसयोगेनेति भाव.॥ २९१॥

समभाग सुवर्णग्रासजीर्ण पारा अपने सौगुने बीजरहित द्रविततान्र को सुवर्ण बना देता है। पादोन (चार तोले) पारे में तीन तोला सुवर्णबीजयुक्त ताम्र को अपने से सौगुने अधिक को मिश्रण करने पर सुवर्ण बना देता है। आधा भाग सुवर्ण का ग्रसित किया हुआ पारा (अर्थात् दो तोले पारे में दो तोले सुवर्ण का ग्रास जारण करने पर) वह चतुर्थांश सुवर्ण बीजयुक्त द्रवित ताम्र को अपने से सौगुने को सुवर्ण कर देता है। चार तोले पारे में एक तोला सुवर्ण ग्रसित कराने पर वह पारा समान भाग सुवर्ण बीज प्रदान किये हुए उस ताम्र को अपने से सौगुने को सुवर्ण रूप में परिणत कर देता है।

इस भाँति ये चार विधियाँ ग्रन्थकार ने कही हैं।

इसी प्रकार यत्किंचित् परिवर्तन के साथ रसहृदयतन्त्र, रसेन्द्रचिन्तामणि और रसकामधेनु ने भी माना है। जैसे कि—'**निर्बीजं समजीर्णे पादेनैव पोडशांशेन। अर्धेन पादयोग पादेनैकेन तुल्यकनकं च॥**' (रसहृदय) '**निर्बीज समजीर्णे पादोने षोडशांशन्तु। अर्द्धेन पादकनकं पादेनैकेन तुल्यकनक च॥**' (रसेन्द्रचिन्तामणि और रसकामधेनु)

वक्तव्य—ग्रन्थकार अपने अनुभव के अनुसार धातुवाद (किमियागिरी) अर्थात् न्यून कीमत की धातु से अधिक मूल्यवान् धातु के निर्माण के कुछ प्रकारों को कहता है। इस विषय में श्रीमद्गोविन्दभगवत्पादाचार्य ने अपने रसहृदयतन्त्र में विभिन्न प्रकार से प्रकाश डाला है और ऐसा प्रतीत होता है कि उन्होंने अपने समय में इस पर अपरिमित अनुभव प्राप्त किया है किन्तु सम्प्रति उस विषय से साधक बहुत ही अधिक दूर हो गये हैं अत उनकी आर्याओं का भाव समझना भी कठिनप्रायसा प्रतीत होता है। रसहृदयतन्त्र का अनुभवी विद्वानों द्वारा विवेचन होना नितान्त आवश्यक है उपर्युक्त आर्या के अनुवाद में ही यह प्रगट होता है कि रसहृदयतन्त्र में जो इसका अनुवाद हुआ है उससे ग्रन्थकार का मन्तव्य अस्पष्ट है॥ २९१॥

**समादिजीर्णस्य सारणयोग्यत्वं शतादिवेधकत्वं च। इतो न्यूनजीर्णस्य पत्रलेपाधिकार एव॥ २९२॥**

अथात्र विशेषमाह–समादिजीर्णस्येत्यादि। समादिजीर्णस्य–समभागसुवर्णजीर्णपारदस्य, आदिशब्देन द्विगुणादिजीर्णस्य ग्रहणम्। धातुषु सारणयोग्यत्व शतादिवेधकत्वं च–स्वमानाच्छतगुणबीजस्य सुवर्णत्वं भवति। इतः—अस्मात्समादिहेमजीर्णसूतात्,

**न्यूनजीर्णस्य–समभागापेक्षया हीनजारितस्य पारदस्य पत्रलेपाधिकार एव ग्रहणं न तु धातुषु धात्वापादनकर्मणीति भावः ॥ २९२ ॥**

समान भाग सुवर्ण आदि ग्रासजीर्ण पारा सारणयोग्य तथा शतवेधित्व माना गया है किन्तु इससे हीन सुवर्णादि ग्रासजीर्ण पारा पत्रलेपाधिकार में ही गृहीत होता है। तात्पर्य यह है कि–समभाग सुवर्ण आदि बीज जीर्ण होने पर ही सारण क्रिया की जाती है और उसके पश्चात् ही वह पारा शतादिवेधनकारक होता है। यदि इससे न्यूनमात्रा में सुवर्णबीज का जारण किया जावेगा तो उसका अधिकार केवल पत्रलेप ही का होगा ॥

**वक्तव्य**—विभिन्न रसतन्त्रों ने यह बात प्रायश सर्वमत से स्वीकार की है कि पारद को निर्बीज रखकर और उसमें सुवर्ण ग्रास न देकर हा साधना की जावेगी तो उसमें वह सफलता कदापि हस्तगत नहीं होगी, जो सबीज और सुवर्ण-ग्रसित पारे से मिल सकती है। इसके समर्थन में **'रसप्रकाशसुधाकार'** कहता है कि—**'समाभ्रे जारिते सम्यग्दण्डधारी भवेद्रस। वालश्च कथ्यते सोऽपि किञ्चित्कार्यकरो भवेत् ॥'** अर्थात् बीजरहित तथा सुवर्ण ग्रास के विना समभाग अभ्रकसत्त्व जारण किया हुआ पारा भी दण्डधारी ही बनता है और उसको **'बालरस'** नाम से सम्बोधित किया जाता है। यद्यपि यह किञ्चित्कार्यकर होता है, किन्तु वैसा नहीं। यही मत रसार्णवकार का है—**'बालस्तु पत्रलेपेन कल्कयोगेन केवल.।'** कहने का तात्पर्य यह है कि—पारद को शत-शहस्रादि वेधन योग्य बनाना हो तो शास्त्रोक्त विधि और मात्रा से बीज का जारण करना नितान्त आवश्यक और अनिवार्य है अन्यथा उचित फल का लाभ नहीं मिलता है और केवल पत्र लेपनाधिकार ही प्राप्त होता है ॥ २९२ ॥

उपर्युक्त विषय को ग्रन्थकार आगे के श्लोक में प्रतिपादित करके बताते हैं—

**यथा—**

**अत्यम्लितमुद्वर्तिततारारिष्टादिपत्रमतिशुद्धम् ।**
**आलिप्य रसेन ततः क्रामणलिप्तं पुटेषु विश्रान्तम् ॥ २९३ ॥**

**अत्यम्लितमित्यादि। तारारिष्टादिपत्र-वक्ष्यमाण रसकामधेनूक्तम्। आदिना रजतताम्रादिदल किम्भूतम्–उद्वर्तितं–दलाकारेण पत्तलीकृतम्, अतिशुद्धं–धात्वन्तरसंसर्गहीनम्। पुनश्चात्यम्लितं–पूर्वप्रतिपादिताम्लवर्गैर्बहुशो भावितम्। क्रामणलिप्त–क्रामणाख्यसंस्कारोक्तद्रव्यैः सम्यग् लेपितम्। ततस्तदनन्तरम्। रसेन–संस्काराधानलेपयोग्यताकेन सूतेन आलिप्य–लेपं कृत्वा, पुटेषु विश्रान्त कुर्यात्–पुटं दद्यादित्यर्थः। तारारिष्टलक्षणं रसकामधेनौ यथा–'वङ्गं नागं तथा कान्तं हिङ्गुलं तीक्ष्णमाक्षिकम्। रविनागकपाली च शुद्धं तार च रञ्जयेत। रञ्जयेत्त्रीणि वाराणि तारारिष्ट तु जायते ॥' इति। अस्य लिप्तपत्रस्य पुट प्रायेण चुल्लिकाधस्तात्–चुल्लिकातोऽधो भागे भवतीति भाव. ॥ २९३ ॥**

पत्रलेपनविधि—तारारिष्ट, चाँदी और ताँबे आदि के अन्य धात्वन्तर संयोगहीन सूक्ष्मपत्र (वर्क) बनाकर अम्लवर्गोक्त द्रव्यों से अनेक वार भावित करे और क्रामण-संस्कारोक्त औषधियों से लेपन करके फिर उपर्युक्त सुवर्णादि-बीजरहित ग्रास-जीर्ण पारे का लेपन कर पुट देवे। प्रायश इस पुट का विधान चुल्ली के नीचे होता है ॥ २९३ ॥

**अर्धेन मिश्रयित्वा हेम्ना श्रेष्ठेन तद्दलं पुटितम् ।**
**क्षितिखगपटुरक्तमृदा वर्णपुटोऽयं ततो देयः ॥ २९४ ॥**

१. 'क्षितखग.–कासीसम्' इति ग्रन्थकार. ।

अर्धेनेत्युपलक्षणम् ।

दलादिसिद्धिमाह–अर्धेनेत्यादि । ततः पुटदानानन्तरं तद्दलं– प्रागुक्त दत्तपुटं तारारिष्टं रजतताम्रादिपत्रं वा पत्रापेक्षयार्धेन–अर्धभागपरिमितेन, श्रेष्ठेन हेम्ना सहस्रधाध्मातेन शुद्धसुवर्णेन द्रवीभूतेन, मिश्रयित्वा तथा पुटितं च कृत्वा पश्चात् क्षितिखगः—कासीस, पटु'–सैन्धवलवणम्, रक्तमृत्–स्वर्णगैरिकम्, एभिर्वर्णपुटोऽय वर्णोत्पादकाख्यो देय. । अर्धेनेति शब्देन न्यूनाधिक्यमपि समिश्रणीयमिति प्रतिपादितम् ॥ २९४ ॥

पूर्वोक्त विधि से पुट दिया हुआ तारारिष्ट रजत, ताम्र आदि पत्र ( वर्क ) की अपेक्षा आधा भाग शुद्ध सुवर्ण को अग्नि में अनेक बार धमन कर उसमें तारारिष्ट आदि पत्र को मिला कर अथवा पुट देकर, हीराकसीस, सेन्धा नमक और सोना गेरु से वर्णोत्पादक ( रंग देने वाला ) पुट देवे । 'अर्धेन' यह केवल उपलक्षण मात्र है, किन्तु न्यूनाधिक सुवर्ण का मिश्रण भी इस विधान में किया जा सकता है ।

वक्तव्य—यह वर्णोत्पादक विधान अनेक रसतन्त्रों में कई प्रकार से कहा गया है । ऊपर का विधान तो सर्वसम्मत है ही, किन्तु इससे भिन्न प्रकार भी 'रसहृदयतन्त्र', 'रसार्णव' तथा 'रसेन्द्रचिन्तामणि' में मिलता है । जैसे कि—

'भूपतिवर्तकचूर्णं शिरीषपुष्परसभावितं बहुश. । सद्य. करोति रक्त सितकनकमसितभागेन ॥' 'रसहृदय' कारने राजावर्त भस्म को शिरीष पुष्प के स्वरस से अनेक बार भावित कर प्रयोग करने को कहा है । यही विधि रसार्णव-कारने भी स्वीकार की है । जैसे कि– 'राजावर्तस्य चूर्णं तु शिरीषकुसुमद्रवै. । भावित बहुश' क्षिप्तमशीत्यशेन वर्णदः ।' 'रसेन्द्रचिन्तामणि' कार भिन्न प्रकार से बताया है । जैसे कि–'तारार्कमर्कटशिरःशिलागन्धान् प्रचूर्णयेत् । पचेद् भूय क्षिपन् गन्ध यथा सूतो न गच्छति । पक्वं तद्धेमपत्रस्थं हेमतां प्रतिपद्यते ॥' अर्थात् शुद्ध चादी, ताम्र, हिङ्गुल, मैनसिल और गन्धक इन सब का भली भांति चूर्ण करे और उसमें पारा तथा सुवर्ण मिलाकर आतशी शीशी में पाक करे, जैसे जैसे गन्धक जारण होता जावे वैसे २ शुद्ध गन्धक का चूर्ण डालता जावे और गन्धक जारण करता जावे । इस प्रकार षड्गुण गन्धक का जारण करना चाहिए किन्तु यह ध्यान रहे कि गन्धक के अभाव में पारद न उड़ जावे । निःशेष गन्धक जारण न होने दे जब थोडा गन्धक बचे तभी दूसरा नवीन गन्धक डालता जावे । इस प्रकार पकाया हुआ चादी और ताम्रचूर्ण सुवर्णता को प्राप्त हो जाते हैं ॥ २९४ ॥

अन्यच्च—

रज्जुभिर्भेकवङ्गेभैः स्तम्भयो. सारलोहयोः ।
बध्यते रसवेतण्डो युक्त्या श्रीगुरुदत्तया ॥ २९५ ॥

रज्जुभिरित्यादि । भेक.–अभ्रकं, वङ्ग.–ख्यात', इभ.–सीसकम् , एभिः पूर्वोक्तैः रज्जुभि.–दामरूपबन्धनै' । सारलोहयोः–सुवर्णरजतयो. । स्तम्भयो'–स्थूणस्वरूपयोः श्रीगुरुदत्तया–पारदकर्मणि चतुराचार्यप्रदत्तया युक्त्या रसवेतण्डः–रसमातङ्गो बध्यते ।

यथा मत्तमातङ्गो रज्जुभिः स्तम्भे सम्बध्यते नेतस्ततो गन्तु क्षमो भवति तथैव रसमातङ्गोऽपि भेकाद्यौषधश्रृङ्खलाभि. सुवर्णरजतयोः स्तम्भे बध्यते इति तात्पर्यम् । बन्धनमुक्तिश्च तत्कर्मणि कुशलेभ्यो ज्ञातव्या ॥ २९५ ॥

अभ्रक, रागा और सीसारूपी रस्सियों द्वारा चादी और सोनारूपी स्तम्भों में रसशास्त्र के विशेषज्ञ गुरु द्वारा प्रत्यक्ष समझाई हुई विधि से पारारूपी हाथी का बन्धन किया जाता है। जिस प्रकार मतवाला हाथी मजबूत रस्सी द्वारा खम्भे में बाध कर वशमें कर लिया जाता है उसी प्रकार अभ्रकादि औषधि रूपी रस्सियों से पारद का भी स्वर्ण और चादी रूपी स्तभ में सहज बन्धन किया जा सकता है।

**वक्तव्य—'युक्त्या श्रीगुरुदत्तया'** का रसशास्त्र में प्रधान स्थान है। रसशास्त्र यह प्रत्यक्ष क्रियासाध्य विज्ञान है केवल पढने से और शास्त्र की परिभाषा एव विधि के भलीभाति समझने से ही सफलता नहीं मिलती है। प्रत्यक्ष कार्य करने से पद-पद पर व्यामोह करने वाली समस्याए उपस्थित होती है उनका समाधान हुए विना कार्य की दिशा धुँधली हो जाती है और उत्साह भग हो कर धैर्य साथ नहीं देता है, ऐसी दशा में एक मात्र दृष्टकर्मा और स्वयकृती गुरु ही प्रधान है अत उसके विना युक्ति और सफलता दोनों नहीं मिल सकती हैं। इसी लिए ग्रन्थ कारने गुरु की विधि का आग्रह किया है ॥ २९५ ॥

**शिलाऽङ्घिभागा गन्धेशौ काचकूप्यां सुवर्णकृत्।**
**कीलालायःकृतो योगः खटिकालेपनाधिकः ॥ २९६ ॥**

**सुवर्णकृद्योगमाह—शिलेत्यादि । शिलाऽङ्घिभागा-मनःशिलायाश्चत्वारो भागाः, गन्धेशौ-शुद्धपारदगन्धकौ तयोरेकभाग चादाय, काचकूप्यां पूरयित्वा तस्या मुख चावरुध्य। कीलालायःकृतो योगः-कीलालं-जलम्, अयः-लोहं, ताभ्या कृतो योगः-लेपरूपः पुनः किम्भूतः-खटिकालेपनाधिकः-खटिकाकृतोऽधिको लेपः । क्वचित् पुस्तके-खटिकालवणाधिकः-खटिका-श्वेतमृत्तिका, लवणं-सैन्धव, ताभ्याम् अधिको योग इति ज्ञेयम्। ततो भूधरयन्त्रेऽग्निना पचेदिति सुवर्णकृद्भवति ॥ २९६ ॥**

मैनसिल चार भाग तथा सस्कारित पारद और शुद्ध गन्धक दोनों एक भाग आतसी शीशी में भरकर उसके मुख पर मुद्रा कर दे। तदनन्तर खडिया मिट्टी जिसमें अधिक हो ऐसा जल और लोह चूर्ण-मिला कर शीशी पर लेप करे और भूधरयन्त्र में अग्नि से पाक करे। इस प्रकार पाक करने से यह प्रयोग सुवर्णकृत होता है ॥ २९६ ॥

**मण्डूकपारदशिलावलयः समानाः, संमर्दिताः क्षितिबिलेशयमन्त्रजिह्वैः।**
**यन्त्रोत्तमेन गुरुभिः प्रतिपादितेन स्वल्पैर्दिनैरिह पतन्ति न विस्मयध्वम् ॥**

अथ मतान्तरमाह—मण्डूकेत्यादि । मण्डूक-मण्डूकाख्यमभ्रकं, तल्लक्षण च-यथा-'उत्प्लुत्योत्प्लुत्य मण्डूकं ध्मातं पतति चाभ्रकम्।' तदिति। पारदः, शिला-मनःशिला, बलिः-गन्धकः, एते सर्वेऽपि समानाः-तुल्याः, क्षितिः-कासीसं, बिलेशयः-सीसकः, मन्त्रजिह्वः-स्वर्णम्। इत्येतैः सार्धं समर्दिता । गुरुभिः-रसशास्त्राचार्यैः प्रतिपादितेन यन्त्रोत्तमेन-भूधरयन्त्राख्येन । तदुक्त-'वालुकागूढसर्वाङ्गगर्त्ते मूषां समन्विताम्। दीप्तोपलैः संवृणुयाद्यन्त्रं तद् भूधराह्वयम् ॥' इति। एतेन सपाचिताः। इह धातुवादे स्वल्पैर्दिनैः पतन्ति-सुवर्णतामुपयान्ति। इति न विस्मयध्वम् ॥ २९७ ॥

अभ्रक, पारा, मैनसिल और गन्धक को समान भाग लेकर, हीराकसीस, सीसा तथा सुवर्ण से मर्दन करके रसवेत्ताओं द्वारा कहे हुए उत्तम भूधरयन्त्र से कुछ दिन पकाने पर सुवर्ण बन जाता है, इसमें कोई सशय नहीं है ॥ २९७ ॥

लोहं गन्धं टङ्कणं भ्रामयित्वा, तेनोन्मिश्रं भेकमावर्तयेत्तु ।
तालं कृत्वा तुर्यवङ्गान्तराले, रूप्यस्यान्तस्तच्च सिद्धोक्तबीजे[1] ॥ २९८ ॥
सिद्धमते लोहभेकि तारभेकीति बीजद्वयम् ॥ २९९ ॥

इदानीं सिद्ध बीजद्वयं प्रतिजानीते–लोहमित्यादि । गन्धं, टङ्कणं–सौभाग्यक्षारम् , एतद् द्वयं च भ्रामयित्वा–सम्यक् मर्दयित्वा, तेन–समर्दितवलिटङ्कणेन, लोहं–तीक्ष्णाख्यं, भेकम् अभ्रकम् , उन्मिश्र–सम्यक् मिलित, तदग्नौ आवर्तयेत–द्रावयेत् , इति लोहभेकि नाम सिद्धबीजम् । पुनश्च द्वितीयं तारभेकि यथा–तुर्यवङ्गान्तराले–वङ्गतश्चतुर्थांशं तालं कृत्वा–हरितालयोगेन वङ्ग हत्वेत्यर्थ । तदेव वङ्गं रूप्यस्यान्त –रजतमध्ये दद्यादित्यध्याहारः । तच्च–रूप्यं सिद्धोक्तबीजे–प्रागुक्तबीजे आवर्तयेत् । इद 'तारभेकि' नाम सिद्धबीजम् । अत्र सिद्धमते–सिद्धसम्प्रदाये लोहभेकि तारभेकि चेति बीजद्वयं निश्चितम् । किन्त्वत्र तारभेकीति न साधीयान् भेकस्यासयोगादिति दिक् ॥ २९८–२९९ ॥

लोह, गन्धक और सुहागा को मर्दन करके उसमें अभ्रक को मिलावे और अभ्रक मिले हुए लोह आदि को अग्नि में द्रवित करे तो लोहभेकी नाम का सिद्धबीज तयार होता है । शुद्ध रांगे से चौथाई भाग हरिताल मिलाकर वङ्गभस्म बनावे, इस हरिताल योग से बनी वङ्ग भस्म को चांदी में मिश्रण करे और उस चादी को पूर्वोक्त सिद्धबीज में मिलावे तो 'तारभेकी' नामक सिद्धबीज तयार होता है । सिद्ध नित्यनाथादि रससशोधकों के मत में 'लोहभेकी' और 'तारभेकी' नामक दो बीज माने गये हैं ॥ २९८–२९९ ॥

अथ सिद्धमते खोटमाह–

द्रुतदर्दुरपूतिलोहसेकः कुरुते हिङ्गुलखण्डपक्षखण्डम्[2] ।
शशिहेलिहिरण्यमूषिका ध्रुवमक्षीणधियामनेन [3]लक्ष्मीम् ॥ ३०० ॥

द्रुतेत्यादि । दर्दुर–दर्दुराख्यमभ्र पूतिलोहो–नागवङ्गौ, एतेषां संमिश्रिताना त्रयाणामग्नियोगाच्च द्रुताना तोयरूपाणां, हिङ्गुलखण्डस्योपरिसेकः–चेतनात्मकस्ताप. कृतश्चेत् स तस्य पक्षखण्डं कुरुते हिङ्गुलभस्म भवतीति भावः । कुत्राऽयं सेको विधेय इत्याह–शशी–रजत., हेलिस्ताम्र, हिरण्यं–सुवर्णम् , एतेषा धातूना मूषिका, लोहघटिता, तत्र दरदं स्थापयित्वोपरि सेक. कार्य । अनेन पूर्वोक्तसेकेन, ध्रुवम् अक्षीणधिया रसकर्मणि बहु कृतप्रयासेनाप्यनिर्विण्णचेतसा बुद्धीना वा लक्ष्मीं सफलता कुरुते ॥ ३०० ॥

हिंगुलखण्ड को चाँदी, तांबा और सोने की बनी हुई मूषा में रखकर ऊपर से अभ्रक, सीसा और रांगे को अग्नि-संयोग से गला कर सेक करे तो हिंगुल का पक्षच्छेदन ( भस्म ) हो

---

१ गन्धं टङ्कण च भ्रामयित्वा समर्थं, तेनोन्मिश्र लोह भेक ( अभ्रक ) च वह्नौ आवर्तयेत–द्रावयेत् , तत् लोहभेकि नाम सिद्धबीजम् । तुर्यवङ्गान्तराले ताल कृत्वा (तालयोगेन वङ्ग हत्वेत्यर्थ ) तद्वङ्ग रूप्यस्यान्तर्दधात , तच्च रूप्य सिद्धोक्तबीजे ( पूर्वोक्तबीजे ) आवर्तयेत् । इद तु तारभेकि नाम सिद्धबीजम् ॥

२ दर्दुरोऽभ्रक, पूतिलोहौ नागवङ्गौ, तेषा मिलितानां द्रुताना सेको हिङ्गुलखण्डस्योपरि कृतश्चेत्तस्य पक्षखण्ड–पक्षच्छेद करोति हिङ्गुलभस्म जायते इत्यर्थ ।

३ शशी तार, हेलिरर्कस्ताम्र, हिरण्य स्वर्णम्, एतेषा मूषिका ध्रुव लक्ष्मी करोति तेषामुपयुक्त सेकेनेत्यर्थ. ।

जाता है। यह सेक, अनेक रसकर्मों को करने पर भी जो अनुत्साही नहीं हुए हैं उन्हें सफलता प्रदान करता है ॥ ३०० ॥

अथान्यत्सिद्धमते खोटः—

**अत्र भेकादिशब्दा धातुवाचका इत्यलं रहस्यप्रकाशेन ॥ ३०१ ॥**
**गन्धतैलयुगलाऽऽयसमध्ये पूतिवारिवशमेष्यति पिष्टिः ।**
**तैलभेकवलिकल्पितपिष्टिः संयमः प्लवगपूत्यभिषेकैः ॥ ३०२ ॥**
**दरदस्यापि पिष्टित्वेन गृहीतत्वात्पूर्वकर्मणि सम्बन्धः ॥ ३०३ ॥**

अत्रेत्यादि। अस्मिन् खोटकरणप्रकरणे भेकादिशब्दा, धातुवाचका –अभ्रकादिधातु-निदर्शकाः। इति रहस्यप्रकाशेन–गूढार्थप्रकटनेन, अल–पर्याप्तम्।

आयसमध्ये—लोहसमुद्भवे पात्रे गन्धतैलयुगला–वलितैलसमन्विता पिष्टिर्नाम दरदः। कुतः पारदगन्धकयोः पिष्टिः कृता सैव काचकूप्यां पाचिता चेद्रससिन्दूरो दरदो वा इति संज्ञां लभते। पूतिवारिवश–पूतिलौहौ यौ नागवङ्गौ तयोर्यद्वारि नाम द्रवस्तस्य वशं स्वाधीनम् एष्यति–लोष्टवद्दृढौ स्थिरीभवतीत्यर्थः।

तैलभेकवलिकल्पितपिष्टि'—तैल गन्धकतैलं भेकोऽभ्रकः, वलि'–गन्धक', एभिर्मिलितैः कल्पिता–रचिता या दरदरूपा पारदगन्धकयो पिष्टि' कज्जलिका तस्या' प्लवग-पूत्यभिषेकै' प्लवगोऽभ्रक, पूतिलौहौ–रङ्गसीसकौ तेषां सम्मिलितानां द्रवीभूतानाम् अभि-षेकैः–परिसेचनकै संयमः–वद्धो भवतीत्यर्थः। पूर्वकर्मणि पिष्टित्वेन–कज्जलीरूपेण गृही-तत्वात्, दरदस्यापि–हिङ्गुलस्यापि सम्वन्ध.–प्रयोजनमित्यर्थः'। इति सिद्धमते खोट ॥

यहाँ खोट-प्रकरण के विषय में आये हुए भेकादि शब्द अभ्रक आदि धातुओं के वाचक हैं, यह विषय यहाँ सर्वथा स्मरणीय रखना चाहिए। लोहपात्र में गन्धक तैल सहित पिष्टिरूप हिंगुल को द्रवीभूत सीसे और रागे में मिला दिया जावे तो वह उसके वश में हो जाता है। अर्थात् इनके द्रव में मिलकर एकात्म स्वरूप बन जाता है और अग्नि-सयोग होने पर भी पारा उड़ता नहीं है किन्तु लोहे के समान स्थिर हो जाता है। गन्धक तैल, अभ्रक और गन्धक पारद की बनाई हुई पिष्टि को अभ्रक, रागा और सीसे के सम्मिलित द्रव से सेचन करने पर गुटिका हो जाती है। यह ध्यान रहे कि 'हेमगर्भपोट्टलिका' आदि का प्रायश' इन्हीं में ग्रहण होना है। प्रथम कर्म में पिष्टि रूप से कहे हुए हिंगुल का भी ग्रहण किया गया है। ये सभी सिद्धों द्वारा बताये हुए खोट हैं।

वक्तव्य—'खोट' शब्द का तात्पर्य यह है कि जिस बन्धन सस्कार से पारे को गुटिकाकार बना दिया जाता है और तीक्ष्णाग्नि में रखकर बार बार धोंकनी से धमन करने पर भी बहुत ही स्वल्पांश में उड़ता है उसको खोट या खोटबद्ध पारद कहते हैं। इसके विषय में आगे ग्रन्थकार ने स्पष्ट लक्षण लिखे हैं। जैसे कि—'बद्धो य खोटतां याति ध्मातो ध्मातः क्षय व्रजेत्। खोट

---

१. गन्धतैलयुगला गन्धतैलसहिता पिष्टिर्नाम दरद, पूतिवारिवशमेष्यति–पूतिलौहौ यौ नाग-वङ्गौ तयोर्यद्वारि नाम द्रव, तस्य वशमेष्यति वह्नावनुड्डयनेनेत्यर्थ।

२ 'वशमेति च' ख पुस्तके पाठ।

३ तैलभेकवलिभिर्मिलितै' कल्पिता या दरदरूपा रसगन्धकयो' पिष्टि तस्याः प्लवगपूत्य भिषेकै' प्लवगोऽभ्रक, पूतिलोहौ नागवङ्गौ, तेषां मिलितानां द्रुतानामभिषेकेण संयमो भवतीत्यर्थ।

बद्धः स विज्ञेयः शीघ्रं सर्वविषापहः ॥' खोटबद्ध पारद में समस्त रोगनाशक शक्ति का सचय रहता है तथा सभी विषों के प्रभाव को भी यह क्षीण करता है। अग्नि में रखने से जो उडे नहीं अर्थात् बहुत अधिक क्षीणाग्नि में धमन करने से ही स्वल्पमात्रा में जिसका क्षय सभव है, वह खोटबद्ध कहलाता है ॥ ३०१-३०३ ॥

अन्यत्र—

अधोऽष्टाङ्गुलतश्चुल्ल्याः सिध्यन्ति सिकतावृताः ।
रसगन्धशिलासर्पाः पाकादग्निविपक्त्रिमाः ॥ ३०४ ॥

अध इत्यादि । रसगन्धशिलासर्पा —रसः, गन्धः, शिला-मनःशिला, सर्पः—सीसकश्चेति सिकतावृताः-वालुकायन्त्रे द्रव्यं यथा वालुकाभिरभितो वेष्टित यथा भवति तथेति बोध्यम् । चुल्लया अष्टाङ्गुलतोऽधः पाकात् । अग्निविपक्त्रिमा —अग्निना विपाचिताः सन्त सिध्यन्ति ॥ ३०४ ॥

पारा, गन्धक, मैनसिल और सीसा इनको कूपिका आदि पात्र में भरकर चुल्ली से आठ अगुल नीचे जमीन में खडा खोद कर उसमें चौतरफ से वालुकावृत ( बालू से वेष्टित ) करके द्रव्य युक्त पात्र के ऊपर आठ अङ्गुल ऊँची स्तर की बालू बिछाना चाहिए अर्थात् द्रव्य पात्र और अग्नि के बीच में आठ अङ्गुल का बालू का व्यवधान होना और उसके ऊपर से अग्नि देकर पाक करना चाहिए। ऐसा करने से अग्नि के ऊपर की जो गर्मी होती है उसकी ऊष्मा से औषध भली प्रकार सिद्ध हो जाती है ॥ ३०४ ॥

खोटान्तरमाह—

सालूरकुटिलार्कस्थरम्भापामार्गभस्मना ।
हस्तीव बध्यते वक्रलोहखण्डिकया रसः ॥ ३०५ ॥

सालूर इत्यादि । सालूरकुटिलार्कस्थरम्भापामार्गभस्मना—सालूरः-अभ्रकं, कुटिल-वङ्गः, अर्कः-ताम्रम् , एषु स्थितो रसः रम्भा कदली, अपामार्गः प्रसिद्धः, अनयोर्भस्मना बध्यते । वक्रलोहखण्डिकया-लोहशृङ्खलया हस्तीव । यथा लोहशृङ्खलया गजो बध्यते तथैव कदल्यपामार्गयोर्भस्मना अभ्रकवङ्गताम्रेषु स्थित पारदो बध्यत इति तात्पर्यम् ॥

अभ्रक, वङ्ग और तावे के मिश्रित चूर्ण में रखा हुआ पारा केला तथा अपामार्ग के क्षार के योग से पूर्वोक्त विधि से अग्नि देने पर बंध जाता है जैसे कि लोहे की टेढ़ी कडीवाली शृङ्खला ( जजीर ) से हाथी बँध जाता है ॥ ३०५ ॥

खोटान्तरमाह—

भेकभास्करगन्धायोवङ्गस्थः क्षारभस्मना ।
हस्तीव बध्यते लोहवक्रचक्रिकया रसः ॥ ३०६ ॥

भेक इत्यादि । भेकभास्करगन्धायोवङ्गस्थः-भेकः-अभ्रकं, भास्कर-ताम्र, गन्धः प्रसिद्धः, अयः-लोह, वङ्गः, एषु स्थितो रसः क्षारभस्मना-अपामार्गक्षारेण भस्मना वा लोहवक्रचक्रिकया-लोहशृङ्खलिकया हस्तीव बध्यते ॥ ३०६ ॥

अभ्रक, तावा, गन्धक, लोह और रागा इनके चूर्ण में रखा हुआ पारा अपामार्ग के क्षार अथ वा भस्म से बँध जाता है, जैसे कि लोहे की साकल से हाथी बँध जाता है।

**वक्तव्य**—ऊपर के २०५ और २०६ के दोनों श्लोकों में क्षार और भस्म ( राख ) का उपयोग बताया है। इन दोनों का उपयोग उसी भाँति किया जाता है और करना चाहिए जिस प्रकार श्लोक २०४ में बालू का प्रयोग किया गया है और उसी प्रकार द्रव्ययुक्त पात्र को चुल्ही के आठ अगुल नीचे खड्डा खोदकर रखना चाहिए और उसके ऊपर आठ अगुल ऊँचा क्षार अथवा भस्म का स्तर देना चाहिए, उस स्तर के ऊपर अग्नि देनी चाहिए। उस अग्नि की मन्द-मन्द ऊष्मा से उसका पाक करना चाहिए। इस प्रकार पारद बद्ध हो जाता है। बालू, क्षार और भस्म का जो प्रयोग किया जाता है वह केवल पारद को अग्नि से सयुक्त होते ही उड न जावे, इससे बचाने के लिए ही होना है। इसके अतिरिक्त चूना तथा अन्य क्षारयुक्त भस्में अथवा क्षारों का भी प्रयोग किया जा सकता है ॥ २०६ ॥

अथ बाह्यं द्रुतय[१]—

**एतास्तु केवलमारोटकमेव मिलिता निबध्नन्ति, फलमस्य कल्पप्रमितमायुः। किंवा पूर्वोक्तग्रासक्रमजारिताः, पूर्वोक्तफलप्रदा भवन्ति। उच्यते च-समजीर्णश्चायं शतवेधी, द्विगुणजीर्णः सहस्रवेधी, एवं लक्षायुतकोटिवेधी समनुकर्तव्यः। चतुःषष्टिगुणजीर्णस्तु धूमस्पर्शावलोकशब्दतोऽपि विध्यति ॥ २०७ ॥**

एता इत्यादि। एतास्तु-बाह्यद्रुतयस्तु, केवलम्, आरोटकमेव-शुद्धपारदमेव मिलिताः-सयुक्ताः, निबध्नन्ति-सयमयन्ति, अस्य-आरोटकस्य, सेवनफल तु कल्पप्रमितमायुः-कल्पावधि-जीवन नैरुज्येनेति शेष'। रसहृदयतन्त्रे यथा-'द्रुतिबद्धो रसराजो गुञ्जामात्रोऽपि योजितो नित्यम्। एकैकेन पलेन हि कल्पायुपजीवित कुरुते ॥' इति। 'सुशोधितो रस. सम्यगारोट इति कथ्यते।' इति। किंवा पूर्वोक्तग्रासक्रमजारिताः-पूर्वप्रतिपादितग्रासक्रमक्रियया जीर्णा. अर्थात् २५८ श्लोकोक्तक्रियया जीर्णा, तथा २५९ एव २६० श्लोकोक्तफलप्रदा. भवन्ति। उच्यते च-अयं सुशोधितो रस. समजीर्णः स्वसमानभागसुवर्णजारित. शतवेधी-स्वप्रमाणाच्छतगुणं ताम्रादिकं सुवर्णयतीत्यर्थ'। अयमेव क्रमो रजतादीनामपीति दिक्। द्विगुणजीर्ण'-एकतोलकपरिमिते सूते द्वितोलकमितं सुवर्णं जीर्णं भवेत्तर्हि द्विगुणजीर्ण इति। स एव सहस्रवेधी- सहस्रांशेन विध्यति। एवम्-अनेन विधिना लक्षवेधी, अयुतवेधी तथा कोटिवेधी समनुकर्तव्यः सम्यक् प्रकारेण सहस्रवेध्यादिर्यथाकृतस्तथा कर्तव्य इति भाव'। पुनश्च चतु षष्टिगुणजीर्णः-स्वमानाच्चतुरुत्तरषष्टिसख्यात्मकबीजजारित' पारद, धूमस्पर्शावलोकशब्दतोऽपि—धूमस्पर्शनदर्शनशब्देभ्योऽपि ताम्रादिक विध्यति सुवर्णयति, इति। किमुत समिश्रणतो भवतीति। यथा हि रससारेऽपि-'समेन शतवेधी स्याद्, द्विगुणेन सहस्रभित्। चतुर्गुणेन लक्षैक कोटि पञ्चगुणेन च ॥ तत्त्वषोडशभिर्वा द्विर्द्वात्रिंशज्जारितो रस.। वेधयेत्सर्वलोहानि स्पर्शधूमावलोकतः ॥' इति। बाह्यद्रुतिर्नामभेषजयोगेन प्राग् द्रुतस्याभ्रकादेः पारदमध्ये प्रक्षेपस्तल्लक्षणं टिप्पण्या द्रष्टव्यम्। बाह्यद्रुतिप्रकारो रसप्रकाशसुधाकरे यथा-'औषधाध्मानयोगेन लोहधात्वादिक सदा। सन्तिष्ठते द्रवाकार सा द्रुति. परिकीर्तिता। बाह्यद्रुतिविधान हि कथ्यते पुरुमार्गत। अभ्रसत्त्व हि मूषाया वज्रवल्लीरसेन हि ॥ सौवर्चलेन संध्मात रसरूप प्रजायते। अभ्रद्रुतेश्च सूतस्य,

१ 'बहिरेव द्रुतं कुर्यादभ्रसत्त्वादिक खलु। जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते ॥ औषधाध्मानयोगेन लोहधात्वादिक सदा। सतिष्ठते द्रवाकार द्रुति' सा परिकीर्तिता ॥' इति ॥

समांशैर्मेलनं मतम् ॥ तेन बन्धत्वमायाति बाह्या सा कथ्यते द्रुतिः। बाह्यद्रुतिक्रियाकर्म शिवभक्त्या हि सिध्यति ॥ गुरोः प्रसादात्स तत महाभैरववन्दनात्। शिवयोरर्चनादेव द्रुतिः सिध्यति बाह्यगा ॥' इति ॥ २०७ ॥

ये बाह्य द्रुतियाँ केवल शुद्ध पारे के साथ मिलाने से ही पारे का बन्धन करती है। इनका फल कल्पान्त आयु प्रदान करना है अथवा पूर्वोक्त २५८ श्लोकोक्त ग्रासक्रम से जारण किया हुआ पारा समस्त फलों को देनेवाला होता है। जैसे कि कहा है—समान भाग सुवर्ण जीर्ण पारा शतवेधी और द्विगुण-जीर्ण सहस्रवेधी होता है। इसी प्रकार अयुतवेधी, लक्षवेधी और कोटिवेधी भी समझना चाहिए। पारे से चौसठ गुना सुवर्णग्रास देने पर वह पारा धूमवेधी, स्पर्शवेधी, अवलोकवेधी और शब्दवेधी तक हो जाता है।

वक्तव्य—बाह्यद्रुति यह पारद का एक संस्कार ही है। अभ्रकसत्त्व, सुवर्ण, लोह आदि धातुओं को सर्वप्रथम औषधों के संयोग से द्रवित (पिघलाकर) स्वेदनादि संस्कारों द्वारा पारद को शुद्ध करके जारणार्थ पारे में जब इनका मेल किया जाता है और द्रवीभूत हुए ये धातु उस पारे में मिलकर एकाकार हो जाते हैं तब गालन-पातन विधि से उस पारे की परीक्षा करनी चाहिए। यदि गालन और त्रिविध पातन से भी इनका स्वरूप यथावत् प्रतीत हो और भिन्नता यत्किंचित् भी न हो तो द्रुति हो गई ऐसा समझना चाहिए। इसका प्रमाण हमने ऊपर संस्कृत टीका में प्रदर्शित किया है। **औषधाध्मानयोगेनेत्यादि**। द्रुति का दूसरा लक्षण यह है कि-जिसमें पांच बातें भलीप्रकार से परिलक्षित हों वह द्रुति कहलाती है-**'निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा। असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम्।'** अर्थात् निर्लेपत्वम्-मूलादि संसर्गहीन, अत्यन्त शुद्ध, निर्मल गुणयुक्त तथा किसी भी पात्र में रखने से पात्र को न लगने वाला गुण निर्लेपत्व कहाता है। कहने का तात्पर्य यह है कि जब द्रुति उत्तम प्रकार की होती है तब उसमें पात्र में न लगना और स्वच्छता दिखाई देना यह गुण स्वभावतः आ जाता है। द्रुतत्वम्-द्रावक औषधियों के संयोग से धातु, रत्न और उपरत्न आदि द्रवीभूत हो जाते हैं, लोहादि धातु का सर्वांश में भली भाँति द्रुतत्व पतलापन होना ही उत्तम है। तेजस्त्वम्-द्रुत द्रव्य चमकदार और उज्ज्वल होता है। लघुता-जिस धातु की द्रुति बनाई जाती है उसका मूलभूत जो वजन होता है उससे कम हो जाना अर्थात् लोहे के मूल द्रव्य के वजन की अपेक्षा उस की द्रुति होने से उसमें हलकापन आ जाता है। असंयोगश्च सूतेन-जिस किसी द्रव्य लोहादि धातु को द्रवित (पतला) किया जाता है और वह द्रवीभूत द्रव्य जब तक पारद से पृथक् अर्थात् असंयुक्त रहता है तब तक उसकी द्रुति संज्ञा है। जब पारद में उसे मिला दिया जाता है और द्रुत द्रव्य और पारद एकाकार हो जाते हैं उनका पृथक्त्व नष्ट हो जाता है अर्थात् पारद और द्रुत द्रव्य में जो भिन्नता थी वह समाप्त हो गई है दोनों एकाकार में समाविष्ट हो गये हैं केवल पारद का स्वरूप और अस्तित्व दीखता है द्रुत द्रव्य का मिलाप प्रगट नहीं है। किसी भी धातु की द्रुति करने का प्रधान हेतु भी यही है कि उस धातु का द्रावण करके पारद में विलीन करना। यह विलीनीकरण सर्वथा आत्मसात् करना होना है। पारद में उसकी भिन्नता की समाप्ति हो जाती है न वह द्रव्य अलग हो सकता है न उसका उसमें वजन बढता और न पारद के रूप में उसके मिलने पर कोई अन्तर ही प्रतीत होता है। ऐसा जब हो जाता है तब उस धातुका द्रुतत्व नहीं रहता है अर्थात् जब तक उसका 'असंयोगश्च सूतेन' पारद के साथ संयोग नहीं होता है तब तक ही उसका अपना द्रुतत्व है संयोग होने पर केवल पारद का ही द्रुतत्व प्रगट है।

यही हेतु है कि द्रुत द्रव्य का पारद में जारण भलीभाति होता है अत द्रुति का सर्वोपरि महत्त्व है। रसशास्त्र में अनेकों धातु द्रावक-गण हैं जिनके सहयोग से धातुओं का द्रावण लिखा है, उसकी विधियाँ भी अनेक हैं और प्रत्येक विधि के साथ अपना-अपना अनुभव भी है। तदनुसार द्रुतिजीर्ण पारद का कार्यकारी प्रभाव और उपयोगिता स्पष्ट प्रतिपादित है। फल प्राप्ति के महत्त्व और अनुभव को यत्र-तत्र घोषित किया गया है। इन बातों पर विचार करने से यह तो स्पष्ट है कि द्रुतियों का निर्माण सभव था और किया जाता था, अन्यथा केवल कल्पना के घोडे नहीं दौडे हैं और कल्पना भी यदि होती है तो उसका भी कोई आधार होता है। निराधार वस्तु की कल्पना ही नहीं होती **'नासतो विद्यते भावो नाभावो विद्यते सतः।'** अत यह कहना कि द्रुति की केवल कल्पना है वस्तुत ऐसा है नही, यह सर्वथा असत्य है। किन्तु बीच का समय ही ऐसा आ गया जिसने सभव को असभव में पहुँचा दिया और उसका इतना अभाव और दुर्लभत्व स्वीकार कर लिया गया कि **'द्रुतयोऽपि न दृष्टास्तु शास्त्रे दृष्टा अपि ध्रुवम्। विना शम्भोः प्रसादेन न सिध्यन्ति कदाचन॥'** इसी प्रकार के प्रमाण सस्कृत टीका में भी हमने सगृहित किये हैं किन्तु हमारा उन सबके मूल में केवल निष्क्रियता, अनुत्साह, अज्ञानता, और शास्त्र वाक्यों में अविश्वास ही प्रधान है–यह मत हे और इसीलिए यह निराशा तथा महत्त्वपूर्ण ज्ञानराशि का अभाव है। अत लगन और सशोधन-मानस का व्यक्ति इस कार्य में बहुत शीघ्र ही सफलता प्राप्त कर सकता हे और इसीलिए किसी को आगे आना चाहिए।

रसशास्त्रियों ने बाह्यद्रुति को इतना महत्त्व दिया है कि उसको देखते हुए यह आवश्यक है कि बाह्यद्रुति यह रसशास्त्र का प्राण है उसके बिना शास्त्र की अपूर्णता प्रकट होती है। जैसे कि— **'द्रुतिबद्धो रसराजो गुञ्जामात्रोऽपि योजितो नित्यम्। एकैकेन पलेन हि कल्पायुषजीवित कुरुते॥'** ( रसहृदयतन्त्रम् ) **'न च बाह्यद्रुतियोगस्तत् कथमिह बध्यते सूत'।'** ( रसकामधेनु ) **'द्रुतिबन्धः पञ्चमोऽसौ देहलोहकरः सदा। अभ्रद्रुतिविशेषेण विज्ञेयोऽसौ भिषग्वरः॥'** ( रसप्रकाशसुधाकर )।

जिस शास्त्र में बाह्यद्रुति का इतना महत्त्व प्रतिपादित किया गया है उसको असाध्य मानकर दूर हटना उचित नहीं है। यही बात ग्रासक्रमजीर्ण पारद के विषय में भी उतनी महत्त्वपूर्ण है। जिसका उल्लेख हमने सस्कृत टीका में किया है। शतवेधी, सहस्रवेधी, अयुतवेधी, लक्षवेधी, कोटिवेधी, धूमवेधी, स्पर्शवेधी, अवलोकवेधी और शब्दवेधी तक पारद को प्राचीनाचार्यों ने स्वीकार किया है और उसके प्रकृष्ट गुणों का स्वागत किया गया है॥ ३०७॥

अथ सारणोच्यते—

**अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा।**
**सैव च्छिद्रान्विता मन्दगम्भीरा सारणोचिता॥ ३०८॥**

**अस्यामेव मूषायां तत्तैलं[1]मपगतकल्कविमलमापूर्य तस्मिन्नधिक[2] मूष्मात्मने द्रुतबीजप्रक्षेपसमकालमेव समावर्तनीयः[3] सूतवर', तदनु सद्यो-मूषाननमाच्छादनीयमेतत्तैलाक्तपटखण्डग्रन्थिबन्धेन, अरुणसितबीजाभ्या-**

---

१ तत्तैलं सारणातैलम्। 'सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपण हि यत्। वेधाधिक्यकर लोहे सारणा सा प्रकीर्तिता॥'

२ तस्मिन् सारणातैले, अधिकमूष्मात्मनि सम्यक् प्रतप्ते। ३ 'समावर्जनीय.'।

मांसं नैव भुञ्जीत । सदा रसभक्षकः कर्पूरमपि वर्जयेत् । कुङ्कुम-केशरं तस्यालेपनं च वर्ज्यम् । कुशलः क्षितौ न स्वपेत । तथा कुमारीं न हन्यात । वातलानि वातकराणि पानान्नभेषजानि च वर्जयेत् । कस्मिंश्चित्पुस्तके 'वातलानि' इत्यत्र 'मातुलानी' इति पाठान्तर-मुपलभ्यते । बुभुक्षितो नैव तिष्ठेत । अजीर्णम्-अधिकभोजनमपि नैव कुर्वीत । दिवारात्रं मन्त्रम्-अघोरमन्त्रं पञ्चाक्षरमन्त्रं वा जपेत । नासत्यवचनं वदेत् । पथ्या दुग्धान्नमुद्गाज्य-शाल्यन्नादि-दुग्धम्, अन्न-गोधूमादिकं, मुद्गम्, आज्यं-घृत, शाल्यन्न-रक्तशाल्यन्नम् । आदि-शब्देन अन्यदपि सात्म्यद्रव्य यत्स्यात् तत्सर्वं भजेत । हे देवि! पौनर्नवं, मेघनादं-तण्डु-लीयक, वास्तुक-चिल्लीशाकं, सैन्धव, नागरं-शुण्ठी, मुस्तं, पद्ममूलानि-कमलमूलानि, दुग्धादीन्येतानि रसभक्षकः सदा भक्षयेत् । पुनः रसभक्षणे दृढमनस्क आत्मज्ञानमा-लभेत । तथा विशेषत शिवस्य पूजा, कथा-तच्चरित्रश्रवण च हे भद्र-पार्वति, एतान्-नियमान् । समयादधिकं वा न लङ्घयेत ॥ ५०९-५२२ ॥

पारद सेवन करने वाले के लिए भोजन आदि का नियम--अतिभोजन, अतिमद्यपान, अति निद्रा, अतिजागरण, अतिस्त्रीप्रसंग, आतप, अतिक्रोध, अतिहर्ष, अतिदुःख, अतिचिन्ता, शुष्क वाद, जलक्रीडा, अतिनिन्दा, कोंहड़ा, ककड़ी, खरबूज ( मतीरा ), तरबूजा, करेला, बैंगन, करौंदा इन सबका रसभक्षणकर्ता परित्याग कर दे । पाप और पशुगमन न करे, चौराहे में न जाय और न विष्ठा-मूत्र का उल्लंघन करे, सत्पुरुष और स्त्रियों की निन्दा न करे, सत्य बोले किन्तु अप्रिय न बोले । कुलथी, अलसी का तेल, तिल, उड़द, मसूर, कबूतर का मांस, कांजी और खाद्य-पायस न खावे । हेमचन्द्र आदि रसतन्त्रकर्ताओं का मत है कि मुर्गी का मांस भी न खाया जावे । नमक, खट्टा रस, चरपरा, कड़वा, पित्तकारक, बेर, नारियल, आम, सोंचर नमक, लहसुन, कच-नार और सहजना इनका सेवन करे । वितण्डावाद, जलक्रीड़ा और दिन में भी पर्यटन न करे । नैवेद्य और कपूर का परित्याग न करे । केशर के तिलक और भूशयन का त्याग करे, कुमारी को न मारे और न वातकारक वस्तुओं का सेवन करे, न भूखा रहे और न अजीर्ण हो उतना भोजन करे, रात और दिन मन्त्र का जप करे, असत्य कदापि न बोले, हितकारी दूध, अन्न, मूंग, घी, षष्टिक चावल आदि का सदैव सेवन करे, पुनर्नवा का साग, चौलाई, बथुआ, सेन्धानमक, सोंठ, नागरमोथा और कमल के मूलों का सेवन उत्तम है । आत्मज्ञान कराने वाली कथा और शिव-पूजन का अभ्यास विशेष करे ॥ ५०९-५२२ ॥

अथ रसवाग्भटे पारदसेवने पथ्यमाह—

( साधितं पारदं शृङ्गदन्तवेण्वादिधारितम् ।
अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि ॥ ५२३ ॥
पर्णखण्डे धृतं सूतं जग्ध्वा तदनुपानतः ।
घृतसैन्धवधान्याकजीरकार्द्रकसंयुतम् ॥ ५२४ ॥
तण्डुलीयकधान्याकपटोलालाबुकादिकम् ।
कुस्तुम्बरी मरीचानि सैन्धवं समभागिकम् ॥ ५२५ ॥
व्यञ्जनार्थं कृतं दद्याद्रससेवकभोजने । )

साधितमित्यादि । साधित पारदं शृङ्गवेण्वादिधारितम्-शृङ्गं-मृगशृङ्ग, दन्तं-हस्तिदन्तं, वेणुः-वंशः, एषां अन्यतमेषु पात्रेषु स्थापितम् । यथाशक्ति देवगोब्राह्मणानर्चयित्वा शङ्करपूजनमपि सर्वथोचितमस्तीति केचित् । ततस्तदनुपानतः-'वाते सक्षौद्रपिप्पल्यपि

च कफरुजि त्र्यूषणं साग्निचूर्णमि'त्यादिना, पर्णखण्डे घृतं सूतं जग्ध्वा ततो घृतं, सैन्धव, धान्याक, जीरकम, आर्द्रकम्, एभिः सहितं सस्कृतं तण्डुलीयक-मेघनादं, धान्याकं-शाकविशेषस्य ग्रहणम् । पटोलपत्रम्, अलाबुका, कुस्तुम्बरी मरिचानि च, व्यञ्जनार्थम्-शाकार्थं कृत समभागिकम, अर्थात् शाकादिकेषु मरिचलवणधान्याकानि यावत्प्रमाणानि भाव्यानि तावन्मितानि स्युरिति रससेवकभोजने दद्यात् ॥ ५२३–५२५ ॥

रसवाग्भट के मत में पारद-सेवन का पथ्य—मृगशृंग, हाथी दांत, वास आदि में रखे हुए सिद्ध पारे को गौ, ब्राह्मण, शिव आदि की यथाशक्ति पूजन करके पान में रखकर पूर्वोक्त अनुपान से सेवन करे। घी, सेन्धानमक, धनिया, जीरा और अदरकसहित चौलाई, धनिया, परवल, तुम्बी, हरी धनिया, मरिच, सेन्धानमक इनका यथायोग्य समभाग व्यञ्जन करके रसभक्षणकर्ता के भोजन में देवे ॥ ५२३–५२५ ॥

गोधूमजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि ।
हंसोदकं मुद्गयूपः पथ्यवर्गः प्रकीर्तितः ॥ ५२६ ॥

गोधूमेत्यादि । गोधूम, शाल्यन्नं रक्तशालिधान्य, शाल्यन्न गोधूमं च जीर्णं ग्राह्यम् । क्षीर, घृत, दधि च गव्यं-गोरिदं, सर्वं क्षीरादिक गव्यमेव ग्राह्यम् । हंसोदकं-जलविशेषं तल्लक्षण यथा 'तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः । समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् । शुचि हंसोदकं नाम निर्मलं जलमुच्यते ॥' इति । मुद्गयूपः-तद्विधि'–'मुद्गानां द्विपलं तोये प्रस्तमर्धाढकोन्मिते । पादस्थ मर्दितं पूतं दाडिमस्य पलेन तत् ॥ युक्त सैन्धवविश्वाह्वधान्यकै' पादिकांशिकैः । कणाजीरकयोश्चूर्णं शन. केनावचूर्णितम् । संस्कृतो मुद्गयूपोऽयं पित्तश्लेष्महरो मत' ॥' इति । पारदसेवनकर्तुरयं पथ्यवर्गः प्रकीर्तित. ॥ ५२६ ॥

पथ्यवर्ग—पुराने गेहूं और साठी चावल तथा गौ का दूध, घी, दही एव हंसोदक नाम का जल और मूंग का यूप यह रससेवनकर्ता के लिए पथ्यवर्ग है ॥ ५२६ ॥

अथ पारदसेवनेऽपथ्यान्याह—

बृहतीबिल्वकूष्माण्डं वेत्राग्रं कारवेल्लकम् ।
माषान्मसूरान् निष्पावान् कुलत्थान् सर्षपांस्तिलान् ॥ ५२७ ॥
बन्धनोद्वर्तनस्नानताम्रचूडसुरासवान् ।
आनूपमांसधान्याम्लं भोजनं कदलीदले ॥ ५२८ ॥
कांस्ये च गुरु विष्टम्भि तीक्ष्णोष्णं च भृशं त्यजेत् ।

बृहतीत्यादि । बृहती-बृहत्कण्टकारी, बिल्व, कूष्माण्ड, वेत्राग्र-वेत्राङ्कुरं, कारवेल्लक, माषान्, मसूरान्, निष्पावान्-राजमाषान्, कुलत्थान्, सर्षपान्, तिलान्, बन्धन, क्वचित्पुस्तके 'बन्धनमि'त्यत्र 'लङ्घनम्'इति पाठान्तरम् । उद्वर्तन, स्नानं ताम्रचूड-कुक्कुटमांस, सुरा-मद्यम्, आसवम्, आनूपमांस-जलसमीपवासिजीवाना, धान्याम्ल चैतान् सर्वान् पारदसेवक. परिवर्जयेत् । तथा कदलीदले, कांस्ये-कांस्यपात्रे च सात्म्यमपि भोजन त्यजेत् । पुन. किंभूतमाहार त्यजेत्, गुर्वन्न, विष्टम्भि-विष्टम्भजनकं, तीक्ष्णोष्ण द्रव्यं भृश त्यजेत् । सामान्यत. पथ्यज्ञानाय तन्त्रान्तरेण युक्ति. सम्पाद्यते–'अत्यम्लकटुतिक्तैश्च सूत. स्रवति सेवितैः । अत्यम्ललवणाहारैर्मन्दवीर्यो भवेद्रसः ॥' इति ॥ ५२७–५२८ ॥

पारे के सेवन में त्याज्य वस्तुएँ-बडी कटेरी, बेल, कोहडा, बेत का अकुर, करेला, उडद,

मसूर, वडे उडद, कुलथी, सरसों, तिल, वन्धन, उबटना, स्नान, मुर्गे का मांस, मल, आनर, जलसमीपवर्ती जीवों का मास, धनिया, खट्टा रस, केले अथवा कांसी के पात्र में भोजन, पचने में भारी, विष्टम्भी तथा तीक्ष्ण और उष्ण वीर्य वाले द्रव्यों का सेवन न करे ॥ ५२७-५२८ ॥

वर्जयित्वा निषिद्धं तु विचित्ररसभुग्भवेत् ॥ ५२९ ॥
स्रवति न यथा रसेन्द्रो न च नश्यति जाठरो वह्निः ॥ ५३० ॥

अथ विचित्ररसयुतं भोजनमाह–वर्जयित्वेत्यादि । पारदसेवयितेति शेषः । निषिद्धं–निषेधितं यद्द्रव्यजातं तत्सर्वं वर्जयित्वा विचित्ररसभुग्भवेत् विचित्रान् विविधान् रसयुक्तानाहारादिकान् भुनक्तीति विचित्ररसभुक् जायेत ॥ अर्थान्निषिद्धवर्जितभोजनसेवनात् रसेन्द्रो देहाद्बहिर्न स्रवति पुनर्जाठरो वह्निरपि न नश्यति ॥ ५२९-५३० ॥

निषिद्ध द्रव्यों को छोडकर अनेक रसमिश्रित भोजन को हितकर माना है जिसके द्वारा न पारे का पतन हो और न जठराग्नि का ह्रास ही हो ॥ ५२९-५३० ॥

यद्यज्ञानात्कथमपि नागादिकलङ्कितो रसो भुक्तः ।
तत्स्रावणाय विज्ञः पिबेच्छिफां कारवेल्लभवाम् ॥ ५३१ ॥

अथाज्ञानादशोधितपारदभक्षणे तद्विषशमनोपायमाह–यदीत्यादि । यदि कथमपि अज्ञानात् नागादिकलङ्कितः–नागादिदोषसहितो रसो भुक्तश्चेत्तदा तत्स्रावणाय चतुरो रोगी कारवेल्लभवां शिफा–जटां कारवेल्लमूलमित्यर्थः । प्रस्तरे जलेन पिष्ट्वा प्रपिबेदित्यर्थः ॥

भूल से अशुद्ध पारे के खा लेने से उत्पन्न विष की शान्ति—यदि कथंचित् नागादिसप्तदोषयुक्त पारे का सेवन किया जाय तो उसके स्रावणार्थ करेले की जड को जल से घोटकर पीवे ॥ ५३१ ॥

अथ रसाजीर्णे शमनोपायमाह—

रसाजीर्णे महाव्याधींल्लक्षयेद्भिषगुत्तमः ।
अभ्यङ्गमनिलक्षोभे तैलैर्नारायणादिभिः ॥ ५३२ ॥
अरतौ शीततोयेन मस्तके परिषेचनम् ।
तृष्णायां नारिकेलाम्बु मुद्गयूषं सशर्करम् ॥ ५३३ ॥
उद्गारे सति दध्यन्नं कृष्णजीरं ससैन्धवम् ।
कार्षिकं स्वर्जिकाक्षारं कारवेल्लीरसप्लुतम् ॥ ५३४ ॥
गोमूत्रसैन्धवयुतं तस्य संस्रावणं परम् ।

रसेत्यादि । रसाजीर्णे सति । रसाजीर्णलक्षणं रसकामधेनौ यथा–'रसराजे त्वजीर्णे तु प्रत्ययोऽस्य भवेत्प्रिये । मूर्च्छाशोफौ भ्रमः कम्पश्छर्दिर्मोहो ज्वरस्तथा ॥ हिक्कावेपथुशूलानि निद्राऽऽलस्यमरोचकः । लिङ्गस्तम्भो ह्यतीसारः कासश्वासविजृम्भिकाः ॥ कर्णास्यचक्षुःकुक्षौ च वृषणोदरमूर्धनि । मन्ददाहो विबन्धश्च जातः सर्वाङ्गसश (च) यः । अन्यांश्चैव महाव्याधीन् रसाजीर्णे तु लक्षयेत्' ॥ इति । उत्तमो भिषक् महाव्याधीन्–दुःसाध्य रोगान् लक्षयेत् । अनिलक्षोभे–पारदाजीर्णेन क्षुभिते वाते सति तैलैर्नारायणादिभिः, आदिशब्देन विषगर्भादीनामपि ग्रहणम् । अभ्यङ्गं कुर्यादिति शेषः । अरतौ–ग्लानौ मस्तके शीततोयेन परिषेचनं कुर्यात् । तृष्णायां सत्यां नारिकेलाम्बु तल्लक्षणं यथा–'स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् । वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ॥' इति । मुद्गयूषं च द्वयोः सशर्करं पिबेत् । उद्गारे सति ससैन्धवं कृष्णजीरकयुक्तं दध्यन्नं भक्षये-

रिति शेषः। तन्त्रान्तरे तु 'उद्गारे सति दध्यन्नं कृष्णमीन सजीरकम्।' इति पाठान्तरमुपलभ्यते। अन्यच्च तस्याजीर्णस्य पारदस्य पर सन्नावण बहिर्नि सारणं यथा—कार्षिक स्वर्जिकाक्षार, चतुर्गुणकठिल्लकस्वरससप्लावितं तथा गोमूत्रसैन्धवयुत पिबेत्तेन बहिर्निर्गच्छति ॥ ५३३–५३४ ॥

रसाजीर्ण की शान्ति—रसाजीर्ण होने पर बहुत सी असाध्य व्याधियां हो जाती हैं। वातप्रकोप में नारायणादि तैलों का अभ्यङ्ग, ग्लानि में मस्तक पर ठंडे जल का परिषेचन, तृष्णा में नारियल का जल और शक्कर मिला मूंग का यूष, उद्गार ( डकार ) में दही से युक्त अन्न, कालाजीरा, सेन्धानमक और एक तोला सज्जीखार को चौगुने करेले के रस में तथा सेन्धानमक के साथ गोमूत्र में मलस्रावणार्थ देना चाहिए ॥ ५३३–५३४ ॥

तस्य रसाजीर्णस्य—

> कर्कोटीसिन्धुगोमूत्रं कारवेल्लीरसप्लुतम् ॥ ५३५ ॥
> सौवर्चलसमायुक्तं रसाजीर्णे पिबेन्नरः ॥ ५३६ ॥
> शरपुङ्खां सुरदालीं पटोलबीजं च काकमाचीं च।
> एतेषामेकतमं क्वथितमजीर्णे रसायने तु पिबेत् ॥ ५३७ ॥

कर्कोटीत्यादि। कर्कोटी—वन्ध्याकर्कोटकी, सिन्धु—सैन्धवलवण, गोमूत्र, कारवेल्लीरसप्लुत, सौवर्चलसमायुक्त च रसस्याजीर्णे सति नरः पिबेत्तेन तस्याजीर्णं प्रशाम्यति। अत्र कर्कोटीगोमूत्रकठिल्लकाना त्रयाणा चतुर्गुणो द्रवो प्राह्यः सैन्धवसौवर्चलयोः कर्ष इति तात्पर्यम् ॥ रसायने अजीर्णे सति शरपुङ्खा—प्लीहशत्रुः, सुरदाली—देवदाली, पटोलबीजं, काकमाची चैतेषा शरपुङ्खादीनामेकतम क्वथित पिबेत्तद्दोषपरिहारायेति भावः ॥५३५–५३७॥

दूसरा प्रकार—ककोटा, गोमूत्र और करेले का रस इन तीनों को सेन्धा नमक और संचर नमक से चौगुना लेकर पीने से रसाजीर्ण की शान्ति होती है तथा सरपुखा, देवदाली, परवल के बीज और मकोय इनमें से किसी एक का क्वाथ रसाजीर्ण में पावे ॥ ५३५–५३७ ॥

हारीतं प्रत्यात्रेयः—

> धान्यादीनां च सर्वेषां यवगोधूमषष्टिकाः।
> नेष्टास्तु विदलाः सर्वे मुक्त्वा मुद्गांस्तथाऽऽढकीम् ॥ ५३८ ॥

धान्यादीनामित्यादि। सर्वेषां धान्यादीना मध्ये यवगोधूमषष्टिका श्रेष्ठाः—स्वभावत एव हितकराः। तन्त्रान्तरे यथा—'शालीना लोहित शालि षष्टिकेषु च षष्टिकः। शूकधान्येष्वपि यवो गोधूमः प्रवरो मतः ॥' इति। नेष्टास्तु—स्वभावत एवाहितकरास्तु मुद्गांस्तथाढकीं मुक्त्वा सर्वे विदला—शिम्बीधान्याकाः स्मृता इति शेषः। यथा—'शिम्बीधान्ये वरो मुद्गो मसूरश्चाढकी यथा।' इति ॥ ५३८ ॥

सम्पूर्ण धान्यों में जौ, गेहूं और साठी चावल उत्तम होते हैं तथा मूँग, मसूर और अरहर को छोड़कर द्विदल धान्य सभी नेष्ट हैं ॥ ५३८ ॥

> आज्यं स्नेहे मधुषु मधुरं चेक्षुजाते हि यत्स्या-
> च्छ्रेष्ठं खण्डं वत वरसितं क्षारयुक्तं न तत्स्यात्।
> हिङ्गु श्रेष्ठं सकलसुरभौ सैन्धवं सिन्धुजेषु
> रागे यूषाः प्रवररजनीसूरणार्द्राश्च कन्दे ॥ ५३९ ॥

आज्यमित्यादि। स्नेहे–स्नेहद्रव्ये तैलादि आज्यं–घृतं, चरके यथा–'सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मताः। एभ्यश्चैवोत्तमं सर्पिः संस्कारस्यानुवर्तनात्॥' इति अन्यत्राऽपि–'नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्तते। यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्॥' इति। मधुषु–मधुररसयुक्तेषु इक्षुजातम्–इक्षुरससमुद्भवं यन्मधुरं द्रव्यं स्यात्तच्छ्रेष्ठम्। तेष्वपि खण्डं, किम्भूतं वरसितं–सर्वास्वपि सितासु वर श्रेष्ठं तद्वरसितम्। पुनश्च किम्भूतं क्षारयुक्तं न स्यात्तदेतत्खण्डं श्रेष्ठं स्यात्। यथा तन्त्रान्तरे–'खण्डं तु विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम्'इति। सकलसुरभौ–सर्वेष्वपि सुगन्धिद्रव्येषु हिङ्गु श्रेष्ठं तथा सिन्धुजेषु–सिन्धुसमुद्भवेषु सैन्धवलवणं श्रेष्ठमित्यध्याहारः। रागे—रागषाडवसट्टकादिके यूषाः श्रेष्ठाः कन्दे–समस्तेष्वपि कन्देषु रजनी–हरिद्राकन्दं, सूरणं–सूरणकन्दम्, आर्द्रं–शृङ्गवेरं च श्रेष्ठम्॥ ५३९॥

स्नेहोंमें घी, मधुर द्रव्यों में ईख से उत्पन्न समस्त मीठी वस्तुएँ और उनमें भी खाँड, तथा उससे भी अधिक क्षाररहित बूरा, सपूर्ण सुगन्धि द्रव्यों में हींग, सिन्धु से उत्पन्न वस्तुओं में सेन्धा नमक, राग, षाडव और सट्टक आदि में यूष और कन्दों में हलदी, सूरणकन्द तथा अदरक उत्तम होता है॥ ५३९॥

अशुभं पत्रशाकं तु सर्वाणि द्विदलानि च।
संस्कृतानि विधानेन न स्युर्दोषकराणि च॥ ५४०॥

अशुभमित्यादि। पत्रशाकं सकलमशुभं रसायनसेविनां विशेषतस्तु द्विदलानि शिम्बीधान्यानि च सर्वाणि अशुभानि किन्तु तान्येव विधानेन–यथोक्तविधिना संस्कृतानि च दोषकराणि न स्युः। अत्राऽऽशङ्कते कि चाशुभान्यपि कानिचिद् द्रव्याणि विधानेन संस्कृतानि कथं शुभानि जायन्ते। तदुक्तं चरके यथा–'गुरूणां लाघवं विद्यात् संस्काराद् सविपर्ययम्। व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिकाः॥' इति। अनेन ज्ञायते किं च विधिना कृतसंस्कारवशादशुभस्य शुभं शुभस्याशुभ भवतीति भावः॥ ५४०॥

पत्ती के शाक और सपूर्ण द्विदलधान्य अहितकर होते है किन्तु वे ही जब विधानपूर्वक सस्कारित किये जावें तो निर्दोष एव हितकारी होते हैं॥ ५४०॥

केशादिजुष्टं कृतशीतमुष्णं शाकावरान्नैर्बहुलं महोष्णम्।
निशोषितं यल्लवणाधिकं च सन्त्याज्यमन्नं रससेविभिस्तत्॥५४१॥

केशादिजुष्टमित्यादि। यदन्नं केशादिजुष्टं–रोमपतनात्संदूषितम्, आदिशब्देन नख सिकतादीनामपि ग्रहणम्। कृतशीतमुष्ण–पूर्वं चोष्णं पश्चाच्छीतीकृतमिति कृतशीत पुनश्चोष्णम्। तन्त्रान्तरे यथा-'घृतं तैल च पानीय कषायं व्यञ्जनादिकम्। पक्त्वा शीतीकृत चोष्णं तत्सर्वं स्याद्विषोपमम्॥' इति। पुनः कीदृश शाकावरान्नैः शाक–पत्रादिशाकमवरान्न—स्वभावतोऽहितकरमन्न तैर्बहुल–सकर, महोष्ण, तथा–निशोषित रात्र्युषितम् अर्थात् सायन्तने पक्वमन्नं प्रातर्भुज्यते तदिति भावः। लवणाधिकं च तदन्न रससेविभिः सत्याज्यम्॥ ५४१॥

पारद सेवन करनेवालों के लिए त्याज्य अन्न—बाल, नख, कंकर आदि से युक्त, एक बार गरम करने पर ठडे को पुन गरम किये जाने पर, पत्तीका शाक और अहितकारी द्रव्यों से युक्त, अधिक उष्ण, रात का बासी और जिस में नमक अधिक हो वह अन्न रस खानेवालों को त्याग देना चाहिए॥ ५४१॥

तक्रं हितं स्नेहगतं तथा दधि गोक्षीरजातं सकलं हितं स्यात् ।
मुक्त्वा च तैलाम्बुसुरारनालं स्यादम्बुपानं न हितं रसायने ॥ ५४२ ॥

तक्रमित्यादि । रसायने स्नेहगतं-घृतयुक्तं तक्रं हित तथा दध्यपि घृतयुक्तं गोक्षीरजातं तु सकलमपि वस्तुजातं हितं स्यात् । तैलाम्बुसुरारनालं च मुक्त्वा, अम्बुपानं रसायन कर्मणि न हितं स्यात् ॥ ५४२ ॥

रसायन-सेवन में भक्ष्य और अभक्ष्य—रसायन सेवन में घृतसहित-छाछ और दही उत्तम हैं । तथा गौके दूध की बनी सभी वस्तुएं श्रेष्ठ हैं । केवल तैलयुक्त जल, सुरा और कांजी का जल का पान। रसायन करने में अहितकर है ॥ ५४२ ॥

तैलं च चित्रागिरिजाभवं यत्सुस्वादहीनं शटितामदग्धम् ।
विनष्टदुग्ध त्वशुभं च सर्वं खादेत्कदाचिन्न रसायनी नरः ॥ ५४३ ॥

तैलमित्यादि । चित्रातैल, गिरिजा-अतसी तत्तैल, यद्द्रव्यं सुस्वादहीनं, शटितं-कुथितम् , आमम्-अपक्वं, दग्धं, विनष्टदुग्ध-शकलीभूतदुग्धं, सर्वमशुभम्-असात्म्य च रसायनी-रसभक्षको नरः कदाचिदपि न खादेत् ॥ ५४३ ॥

चित्राका तैल, अलसीका तैल, जो भी स्वादहीन द्रव्य हो वह, सड़ा हुआ, कच्चा, जला हुआ, फटा दूध और सपूर्ण असात्म्य द्रव्य इनको रसायनसेवी मनुष्य कदापि न खावे ॥ ५४३ ॥

पुष्पजातं फलं सर्वं मधुरं मांसशर्करम् ।
पाकयुक्तमशीर्णं च श्रेष्ठमुक्तं रसायने ॥ ५४४ ॥

रसायनसेविने प्रशस्तान् पदार्थानाह—पुष्पजातमित्यादि । पुष्पजातं, सर्वं मधुरं फलम् । अथवा सर्वं मधुर द्रव्यं, तथा मांसशर्करं, पाकयुक्तं-पक्व, पचनशीलं वा अशीर्णम्-अगलित च क्वचित्पुस्तके 'अशीर्णमि'त्यत्र 'अजीर्णमि'ति पाठभेदः । एतत्सर्वं रसायने श्रेष्ठमुक्तम् ॥ ५४४ ॥

रसायनसेवी के लिए हितकर भक्ष्य—फूल एवं सपूर्ण मीठे फल तथा समस्त मधुर वस्तुएँ, पका हुआ फल, बिना गला, मास और शक्कर ये सभी रसायनी के लिए उत्तम हैं ॥ ५४४ ॥

असितायाः सवत्सायाः प्राहुर्दुग्धं जलैः शृतम् ।
बलवृद्धिकरं वृष्यं श्रेष्ठमुक्तं रसायने ॥ ५४५ ॥

असिताया इत्यादि । असिताया -कृष्णाया' । केचन तु 'असिताया' इत्यत्र, 'अकृष्णाया' इति पाठभेदः । सवत्साया गोर्जलैः शृतं दुग्धं बलवृद्धिकरं-बलकर शरीरवृद्धिकरं च । वृष्यं-शरीरपुष्टिकर प्राहु., रसतन्त्रकर्तार इति शेष. । तथा रसायने श्रेष्ठमुक्तम् ॥ ५४५ ॥

जल मिलाकर पकाया हुआ बछडेवाली काली गौका दूध रसायन में बलवृद्धि और शरीरपुष्टि के लिए उत्तम है ॥ ५४५ ॥

गव्यं सुदुग्ध सलिलार्धकेन संपाच्य तत्क्षीणजलं सुशीतम् ।
खण्डेन वा शर्करया समेतं रसेन्द्रभोक्ता प्रपिबेत्सदैव ॥ ५४६ ॥

अथ रससेवनावसरे गव्यदुग्धप्रशंसामाह—गव्यमित्यादि । गव्य-गोरिदं गव्यं सुदुग्धम् । तल्लक्षणं यथा—'स्वादु शीत मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् । गुरु मन्दं प्रसन्नं च गव्य दशगुणं पयः ॥' इति । सलिलार्धकेन-दुग्धप्रमाणादर्द्धजलप्रक्षेपणेन

सपाच्य, तत्क्षीणजलं ज्ञात्वा चुल्ल्युपरितः समुत्तार्य सुशीतं कृत्वा खण्डेन वरसितेन शर्करया वा समेतं रसेन्द्रभोक्ता सदैव प्रपिवेत् यथेच्छमिति शेषः ॥ ५४६ ॥

गायका सुन्दर दूध आधा जल डालकर पकावे जब पानी जलकर केवल दूध अवशेष रहे तब ठंडा होनेपर शक्कर अथवा खांड मिलाकर रससेवी सदैव पीवे ॥ ५४६ ॥

अथाष्टविधं सुपथ्यजलमाह—

दिव्यान्तरिक्षं धुनिजं च कौपं स्वयं विशीर्णाद्रि शिलातलोद्भवम् ।
तडागजं सारसमौद्भिदं यत्तोयं मतं त्वष्टविधं मनोरमम् ॥५४७॥

दिव्यान्तरिक्षमित्यादि । दिव्य-दिवि भवं दिव्यं चान्तरिक्षं च दिव्यान्तरिक्षम्, तल्लक्षण यथा-'दिव्यं चतुर्विधं प्रोक्तं धारजं करकाभवम् । तौषारं च तथा हैमं तेषु धारं गुणाधिकम् ॥' इति । 'धाराभि· पतित तोयं गृहीतं स्थूलवाससा । शिलायां वा सुधायां वा धौतायां पतितं च तत् ॥ सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते । भाजने मृन्मये वापि स्थापित धारमुच्यते ॥ धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु । सौम्य रसायन बल्यं तर्पणं ह्लादि जीवनम् ॥ पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् । तृष्णां हरति चात्यर्थं विशेषात्प्रावृषि स्थितम् ॥' इति । चरके च यथा-'शीत शुचि शिवं मृष्टं विमल लघु षड्गुणम् । प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते ॥' इति । धुनिजं-नादेयं यथा-'नद्या नदस्य वा नीर नादेयमिति कीर्तितम् ।' चरके यथा-'नद्याः पाषाणविच्छिन्नविक्षुब्धविमलादकाः । हिमवत्प्रभवा· पथ्याः पुण्या देवर्षिसेविता· ॥ नद्य पाषाणसिकतावाहिन्यो विमलोदका· । मलयप्रभवा याश्च जल तास्वमृतोपमम् ॥' इति । कौपं-कूपोद्भवं, तल्लक्षण यथा-'भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृति । बद्धोऽबद्धः स कूप· स्यात्तदम्भः कौपमुच्यते ॥ कौप पयो यदि स्वादु त्रिदोषघ्न हितं लघु । तत्क्षारं कफवातघ्न दीपनं पित्तकृत्परम् ॥' इति । स्वयं विशीर्णाद्रि-नैर्झरजल, तल्लक्षणं यथा-'शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः । स तु प्रस्रवणश्चापि तत्रत्य नैर्झरं जलम् ॥ नैर्झरं रुचिकृन्नीर कफघ्न दीपनं लघु । मधुरं कटुपाकं च वातलं स्याच्च पित्तलम् ॥' इति । शिलातलोद्भव-चौण्ड्यजलं तल्लक्षण-'शिलाकीर्णं स्वय श्वभ्र नीलाञ्जनसमोदकम् । लतावितानसंछन्न चौण्ड्यमित्यभिधीयते ॥ चौण्ड्य वह्निकर नीर रूक्षं कफहरं लघु । मधुर पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥' इति । तडागजं जल तल्लक्षणं-'प्रशस्तभूमिभागस्थो बहुसवत्सरोपित· । जलाशयस्तडाग· स्यात्ताडागं तज्जल स्मृतम् ॥ ताडागमुदक स्वादु कषाय कटुपाकि च । वातलं बद्धविण्मूत्रमसृक्पित्तकफापहम् ॥' इति । सारस-सरसि भव जलं, तल्लक्षणं-'नद्या· शैलादिरुद्धाया यच्च संश्रित्य तिष्ठति । तत्सरोजलसञ्ज्ञं च तदम्भ· सारस स्मृतम् ॥ सारस सलिल बल्यं तृष्णाघ्न मधुरं लघु । रोचनं तुवरं रूक्षं बद्धमूत्रमलं स्मृतम् ॥' इति । औद्भिद जल, तल्लक्षणं-'विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत् । तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥ औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम् । प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥' इति । यत् पूर्वोक्तं तोयमष्टविधं तद्रससेवनकर्त्रे मनोरमम् । कस्मिन्नृतौ कीदृश नीरं विशेषत· पथ्यतममिति तन्त्रान्तरतः प्रदश्यते यथा-'तत्र वर्षास्वन्तरिक्षमौद्भिद वा सेवेत महागुणत्वात्, शरदि सर्वप्रसन्नत्वात्, हेमन्ते सारसं ताडागं वा, वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेव, प्रावृषि चौण्ड्य मनवमनभिवृष्टं संस्कृत वा सर्वं चे'ति गङ्गाधरः ॥ ५४७ ॥

आठ प्रकार का जल—दिव्यान्तरिक्ष' ( धाराजल, कारक, तौषार और हैम इन भेदोंसे दिव्य जल चार प्रकार का है )। धुनिज ( नद अथवा नदी के जल को धुनिज कहते हैं। ), कौप ( अल्प विस्तार, गहरी और मण्डलाकारका पृथिवी खोद कर बनाये हुए का नाम कूप है उसका जल यदि मीठा हो तो त्रिदोषघ्न, हितकारी हलका और दीपन होता हे ), स्वय विशीर्णाद्रि ( झरने के जल का नाम स्वय विशीर्णाद्रि है यह रुचिकारक, कफ को नष्ट करनेवाला, दीपन और हलका होता है )। शिलातलोद्भव ( यह चौण्ड्य नामक जल है। यह जल अग्नि को प्रदीप्त करने वाला, रूक्ष, कफनाशक और मधुर होता है )। ताडागज ( तालाब का जल मधुर, कषैला, कटुपाकी और वायुकर होता है )। सारस ( सरोवर का जल तृष्णाको नष्ट करनेवाला, वलकारक, मीठा और हलका होना है )। औद्भिद ( भूमि फोडकर बडे प्रवाह के साथ निकलने वाला जल औद्भिद्र होता हैं यह जल पित्त को शान्त करने वाला, अविदाही अतिशीतल होता है )। उपर्युक्त भेदों से जल के आठ प्रकार हैं। वर्षा ऋतु में अन्तरिक्ष और औद्भिद जल, शरद में सब प्रकार के जल, हेमन्त में सरोवर और तालाब का जल, वसन्त और ग्रीष्म में कुए तथा झरने का जल, प्रावृट् ऋतु में चौण्ड्य जल उत्तम होता है ॥ ५४७ ॥

अन्यच्च—

अक्षारं स्वादु मृष्टं दिनमणिकिरणैर्वासरे तप्तमादौ
रात्रौ शीतांशुरोचिस्त्रिविधसुपवनान्दोलितं दोषहीनम्।
कर्पूरै राजचम्पैरतिशयविमलैः पाटलैलासुपुष्पै-
स्त्वग्धान्यैर्वासितं यद्वरशिशिरजलं सूतसेवी पिबेद्धि ॥ ५४८ ॥

अक्षारमित्यादि। अक्षारं, स्वादु, मृष्टं—शोधित, पुन. कीदृशम्र आदौ वासरे दिवसे दिनमणिकिरणै.—सूर्यरश्मिभिस्तप्त पुनश्च रात्रौ शीतांशुरोचिः—चन्द्रप्रभाभि' कृतशीलमित्यर्थ'। 'रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः।' इत्यमर.। पुनस्त्रिविधसुपवनान्दोलितं—त्रिप्रकारकेण शीतलमन्दसुगन्धात्मकेन शुद्धवायुना आन्दोलितं दोषहीनं—कालेन पक्वम· दोषमित्यर्थ.। पुन' कीदृशं कर्पूरै, राजचम्पै—बृहच्चम्पापुष्पै., पाटला—सेवती गुलाब.—सुरपुन्नागो वा, एला ख्याता, अनयो. सुपुष्पैरतिशयविमलैर्वासित त्वक्—दालचीनीति, धान्यैर्धान्याकै' कृत यद्वरशिशिरजल तत्सूतसेवी पिबेत् ॥ ५४८ ॥

अन्य जल की परीक्षा—जो जल खारा न हो, मीठा, निर्मल, दिन में सूर्य की किरणों से सतप्त और रात में चन्द्र-किरणों से शीतल, तीन प्रकार की शीतल, मन्द और सुगन्ध वायु से हिलाया हुआ, दोपरहित, कपूर, चम्पा, पाटला ( गुलाब ), इलायची, आदि के फूलों से अतिनिर्मल एव सुगन्धित तथा अतिशीतल और दालचीनी, धनिया आदि से सुवासित जल को पारे का सेवन करनेवाला पीवे ॥ ५४८ ॥

श्रीनारायणसंज्ञकेन च वलातैलेन चान्येन वा
कार्यं मर्दनकोविदै रसभुजां मल्लैः सदा मर्दनम्।
चातुर्जातलवङ्गकुङ्कुमनिशामुरतासुमांसीभवै-
श्चूर्णैर्भृष्टमसूरमुद्गयवजैरुद्वर्तनं कारयेत् ॥ ५४९ ॥

अथ पारदसेविने मर्दनोद्वर्तनविधिमाह—श्रीनाराणसञ्ज्ञकेनेत्यादि। श्रीनारायणसञ्ज्ञकेन तैलेन तस्य विधिस्तु यथास्थानं द्रष्टव्यः। वलातैलेन, अन्येन—प्रसारण्यादितैलेन वा

मर्दनकोविदैः-मर्दनकर्मणि कुशलैर्मल्लै रसभुजां सदा मर्दनं कार्यम् । मर्दनानन्तरं चातुर्जातं-त्वगेलापत्रकेशरं, लवङ्गं, कुङ्कुमं-केशराख्यं, निशा-हरिद्रा, मुस्ता, सुमांसी, एतेषां द्रव्याणां कृतैश्चूर्णैस्तथा भृष्टैः-सुपक्वैः मसूरः, मुद्गः, यव. तज्जैश्च चूर्णैरुद्वर्तनं कारयेत् ॥ ५४९ ॥

रससेवन कर्ता के लिए मालिश और उबटन का विधान—रस खाने वाले अपने शरीर में मालिश करने में चतुर एव पहलवानों से नारायण तेल, बलातैल अथवा दूसरे किसी वातनाशक तैल की नित्य मालिश करावे और तत्पश्चात् दालचीनी, इलायची, तेजपात, नागकेसर, लौंग, केशर, हल्दी, नागरमोथा, जटामासी, इनका चूर्ण तथा भूने हुए मसूर, मूँग और जौ के चून का उबटना बना कर शरीर पर मर्दन करावे ॥ ५४९ ॥

सौख्योष्णैः सलिलैर्द्रुतं रसभुजां स्नानं सुजीर्णेऽशने
वात पित्तकफौ निहन्ति बलकृत्त्वग्वर्णकृद्बृंहणम् ।
रूपद्योतिकरं मन.प्रशमनं कामस्य संवर्धनं
नारीणां च मनोहरं श्रमहरं देहे रसक्रामणम् ॥ ५५० ॥

अथ स्नानस्य गुणानाह-सौख्योष्णैरित्यादि । सौख्योष्णैः-सुखस्य भावं सौख्यं सौख्यं तदुष्ण च सौख्योष्णन्तै. सौख्योष्णैरिति विग्रहः । सलिलैः जलैः, अशने-भोजने सुजीर्णे सति रसभुजां स्नानं शीघ्रमेव वातं, पित्तकफौ च निहन्ति । पुनश्च बलकृत्, त्ववर्णकृत्-त्वचः सुवर्णकर, बृंहणं, रूपद्योतिकरं. मनःप्रशमनं—मनसो रागादिविषयेभ्यो विनिवारकम् अथवा ह्लादकरं, कामस्य संवर्धनं, द्रुतमिति सर्वत्र योज्यम् । नारीणां च मनोहरं भवति । श्रमहरम्-आयासघ्नं पुनर्देहे रसक्रामणं च करोति स्नानमिति ज्ञेयम् ॥

स्नानविधि और फल-रससेवी सुखोष्ण जल से भोजन के जीर्ण होने पर तत्काल स्नान करे । यह स्नान वात, पित्त और कफ को नष्ट करता है, बल को बढाता, त्वचा को सुन्दर बनाता, शरीर को पुष्ट करता, रूपकी द्युति को चमकाता, मन को प्रसन्न रखता, कामोत्तेजन करता, स्त्रियों के मन को हरण कर्ता, थकावट को दूर करता और शरीर में रस ( पारद ) का क्रामण करता है ॥ ५५० ॥

अथ देहसिद्धिदानन्यानपि रसेन्द्रप्रयोगान् व्याचक्ष्महे । श्लोकद्वयं तत्र प्रागध्येतव्यं मृतपरीक्षार्थं, यथा—

कचकचिति न दन्ताग्रे कुर्वन्ति समानि केतकीरजसा ।
योग्यानि हि प्रयोगे रसोपरसलोहचूर्णानि ॥ ५५१ ॥

कचकचीत्यादि । दन्ताग्रे संलग्नानीति शेषः । कचकचिति-सिकताभक्षणोत्पन्नशब्दवत्करचकरचेति शब्दं न कुर्वन्ति । तथा च केतकीरजसा-केतकीपुष्पपरागेण समानि रसोपरसलोहचूर्णानि रसा.-अभ्रवैक्रान्तमाक्षिकादयः, उपरसाः-गन्धाश्मगैरिककासीसादय', लोहा'-स्वर्णताराररताम्रादयः, एतेषां चूर्णानि-भस्मानि प्रयोगे योग्यानि भवन्ति ॥

देहसिद्धि को देनेवाले पारे के अन्य प्रयोगों को कहते हैं परन्तु इस विषय में सर्वप्रथम इन दो पद्यों का जानना अत्यावश्यक है । रस, उपरस, धातु और उपधातु आदि की भस्मों की पहिचान—जो दांतों के अग्र भाग में रखकर चबाने से केतकी के रज के समान करच-करच शब्द न करें वे सभी रस आदि की भस्में प्रयोग करने के योग्य हैं ॥ ५५१ ॥

वल्मीककूपतरुतलरथ्यादेवालयश्मशानेषु ।
जाता विधिनाऽपि हृता ओषध्यः सिद्धिदा न स्युः ॥ ५५२ ॥

कुत्सितस्थानजानामोषधीनामग्राह्यत्वमाह—वल्मीकेत्यादि । वल्मीकं-बहुशिखराकारं सर्पगृहं, कूप, तरुतलं-वृक्षस्याधोभागे यावच्छाया पतति तावद्भागं ग्रहीतव्यम् । रथ्या-प्रतोली, देवालयः, श्मशानम्, एषु स्थानेषु जाता ओषध्यः, विधिनापि हृताः सिद्धिदा न स्यु. । ओषधिग्रहणविधि'—'गृह्णीयात्तानि सुमनाः शुचिः प्रात. सुवासरे । आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि ॥' इति ॥ ५५२ ॥

ओषधिग्रहणविधि—बाम्बी, कूँआ, वृक्ष के नीचे की, गली कुचली की, मन्दिर की, श्मशान की उत्पन्न ओषधि विधिसहित लाई हुई भी कार्य में नहीं वर्तना चाहिए क्योंकि वे सिद्धिप्रद नहीं होती ॥ ५५२ ॥

अथ सर्वप्रयोगयोग्यतया रसेन्द्रमारणाय शाम्भवी मुद्रामभिदध्मः—

अधस्ताप उपर्यापो मध्ये गन्धकपारदौ ।
यदि स्यात्सुदृढा मुद्रा मन्दभाग्योऽपि सिध्यति ॥ ५५३ ॥
यदि कार्यमयोयन्त्रं दिह्यात्तं मृत्स्नया तदा ।
समे गन्धेन रोगघ्नो द्विगुणे राजयक्ष्मजित् ॥ ५५४ ॥
जीर्णे गुणत्रये गन्धे कामिनीदर्पनाशनः ।
चतुर्गुणेन तेजस्वी सर्वशास्त्रविशारद' ॥ ५५५ ॥
भवेत् पञ्चगुणे सिद्धः षड्गुणे मृत्युजिद्भवेत् । इत्याद्युक्तमेव ॥

अध इत्यादि । यस्य मध्ये गन्धकपारदौ दत्त्वा तदध-यन्त्राधोभागे तापः-अग्निः । उपर्याप'-जलानि च । यदि कथमपि सुदृढा-जलाग्निसहा सजितमुद्रा स्यात्तदा मन्द-भाग्योऽपि भिषक् सिध्यति-सूते बलिजारणकार्यं साधयतीत्यर्थ' । यदि चेद्रसेन्द्रे गन्धक-जारणार्थं लोहयन्त्रं कार्यं स्यात्तदा तन्निर्माणाय विशिष्ट लोह तीक्ष्णादिकमपेक्ष्यते पुनश्च त पारद यन्त्रे चेत् तदिति साधीयान् पाठो यन्त्रशब्दस्य क्लीबत्वात् , यन्त्रं मृत्स्नया-प्रशस्तया मृदा मदनमुद्रया वा दिह्यादग्नि च दद्यादिति शेषः । शेष व्याख्यातमेव प्राक् । मदनमुद्रालक्षण यथा रसकामधेनौ—'औदुम्बराख्यवटदुग्धपलं पल च लाक्षापलं त्वृषिपलं त्वथ सुम्बकस्य । सकुट्यमानमतसीफलतैलमिश्र सूतस्य जारणविधौ मदनाख्यमुद्रा ॥' इति । अन्यविशेष'—'मधूच्छिष्टं प्रस्थमित, लौहचूर्णं च प्रस्थमितं, गुग्गुलुदुग्धमपि ताव-न्मात्रं, वस्तुचतुष्टयमेतदेकीकृत्य दिनत्रय कुट्टयित्वा गोलक विदध्यात्तच्च जलपूर्णघटे सस्थाप्य घट च चुल्ल्यामारोप्य तीव्राग्निना तावत्पचेद्यावत्तद्गोलक जले प्लवेत् । यदा गोलक पानीये निमज्जेत्तदाऽग्नि निर्वाप्य जले शीतीभूते गोलकं निःसार्य तेन मुद्रां कुर्यात् ॥ इति ।'

अत्राय भाव'—लोहघटाभ्यन्तरे पारदगन्धकौ प्रक्षिप्य तल्लौहघटवदन पृष्ठलग्नलोह-मयालवालकमावर्तयुक्तमन्यलोहघटमुख यथा गिलेत्तया द्वयो सन्धिरोध विधाय सुदृढां च मुद्रा कृत्वा बलिजारण कुर्यात् ॥ ५५३-५५५ ॥

सम्पूर्ण प्रयोगों के योग्य रसमारणार्थ शाम्भवी मुद्रा कहते हैं—यन्त्र के बीच में पारद और गन्धक को रखकर यन्त्र के नीचे अग्नि और ऊपर जल देकर सिद्ध करे, यदि मुद्रा अधिक दृढ

होगी तो यह अवश्य यथावत् सिद्ध होगा। यदि यह यन्त्र लोहे का बनाया जावे तो भी इस पर मिट्टी का लेप देना अनिवार्य है। इस विधि से गन्धक-जारण करे ॥ ५५३–५५५ ॥

अथ गन्धामृतरसः—

भस्मसूतं द्विधा गन्धं शतं कन्याम्बुमर्दितम् ॥ ५५६ ॥
रुद्ध्वा लघुपुटे पाच्यमुद्धृत्य मधुसर्पिषा।
निष्कं खादेज्जरां मृत्युं हन्ति गन्धामृतो रसः ॥ ५५७ ॥
समूलं भृङ्गराजं च छायाशुष्कं विचूर्णयेत्।
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिता भवेत् ॥ ५५८ ॥
पलैकं भक्षयेच्चानु वर्षान्मृत्युजरापहः।

भस्मसूतमित्यादि। भस्मसूतं तस्मात् द्विधा–द्विगुणितं गन्धम्, इति गन्धामृतो रसः। शतं–शतवारं, कन्याम्बुमर्दितं यथावत्पिष्टमिति विज्ञाय चक्रिकां कृत्वा छायायां शुष्कीकृत्य ततो लघुपुटे रुद्ध्वा पाच्यम्। तत उद्धृत्य मधुसर्पिषा-विषमाभ्यां घृतमधुभ्यां सह निष्क-टङ्कप्रमाणमात्रं, 'स्याच्चतुर्माषकै शाणः स निष्कष्टङ्क एव च।' इति परिभाषा। खादेत् गन्धामृत नामधेयो रसः। स जरां–वार्धक्यम्, मृत्यु च हन्ति। पुनश्च समूलं भृङ्गराजं छायाशुष्क कृत्वा विचूर्णयेत्। तत्समं त्रिफलाचूर्णं च विमिश्रय तत्र सर्वतुल्या सिता योज्या। अनु–गन्धामृतरसस्य पश्चात् प्रातः-सायं कालद्वयं वर्षं यावत् पलैकं चूर्णं भक्षयेत्। एवं स मृत्युजरापहः स्यात् ॥ ५५६–५५८ ॥

गन्धामृत रस—पारे की भस्म एक भाग, उससे द्विगुण शुद्ध गन्धक दोनों को सौ बार ग्वार-पाठे के रस में मर्दन करके लघुगजपुट में बन्द कर दे और पकावे इसका एक टकमात्रा से शहद और घृत के साथ वार्धक्य तथा मृत्युनाशार्थ सेवन करे। इसकी पूर्ण सफलता के लिए भांगरे के पञ्चाङ्ग को छाया में सुखाकर चूर्ण कर ले, इस चूर्ण के बराबर त्रिफला चूर्ण और दोनों के समभाग मिश्री मिलाकर एक पल की मात्रा से गन्धामृत के अनुपान में एक वर्ष तक सेवन करे तो यह बुढापा और मृत्यु को जीतता है ॥ ५५६–५५८ ॥

अथ हेमसुन्दररसः—

मृतसूतस्य पादांशं हेमभस्म प्रकल्पयेत् ॥ ५५९ ॥
क्षीराज्यमधुना मिश्रं माषैकं कान्तपात्रके।
लेहयेन्मासषट्कं तु जरामृत्युविनाशनम् ॥ ५६० ॥
वाकुचीचूर्णकर्षैकं धात्रीफलरसप्लुतम्।
अनुपानं सदा लिह्यात् स्याद्रसो हेमसुन्दरः ॥ ५६१ ॥

मृतेत्यादि। मृतसूतस्य, सर्वत्र रसप्रकरणे मृतसूतेन रससिन्दूरं चन्द्रोदयो वा ग्रहीतव्य (सम्प्रति कनकस्योत्थानासम्भवाच्चन्द्रोदयोऽपि रससिन्दूरायते) पादांश हेम-भस्म प्रकल्पयेत्। कान्तपात्रके–तीक्ष्णायसपात्रे तदभावे तु केवले लोहपात्रे। क्षीराज्य-मधुना मिश्रं माषैकं माषषट्क यावल्लेहयेत्। तस्य जरामृत्युविनाशनं भवति। तत्कर्म यथा चरकेऽनुपानफलम्–'अनुपान तर्पयति प्रीणयति ऊर्ज्जयति पर्याप्तिमभिनिर्वर्त्तयति भुक्तमवसादयति, अन्नसंघातं भिनत्ति, मार्दवमापादयति, क्लेदयति, जरयति सुखपरि-णामितामाशुरस्य जनयतीति ॥' यथाऽन्नस्यानुपानं तथैवान्येषां द्रव्यादीनामिति दिक्।

हेमसुन्दररसोऽयं सदा लिह्यात्, अस्यानुपानं-कर्षैकं वाकुचीचूर्णं, धात्रीफलरसप्लुतम्, अत्रामलकीफलरसस्य चत्वारः कर्षाः ॥ ५५९-५६१ ॥

हेमसुन्दर रस—रससिन्दूर में उससे चौथाई भाग सुवर्ण भस्म मिलाकर एक माशे की मात्रा से लोहपात्र में दूध, घी और शहद के साथ छ मास तक सेवन करने से मृत्यु और बुढापा नष्ट होता है। भावार्थ यह है कि रस-सेवन के बाद आमले के ४ तोले रस में एक तोले बावची के चूर्ण को मिलाकर चाटे॥ ५५९-५६१ ॥

अथ मृत्युञ्जयरसः—

वलिः सूतो निम्बूरसविमृदितो भस्म सिकता-
ह्वये यन्त्रे कृत्वा समरविकणाटङ्कणरजः।
त्रिघस्रं लुङ्गाम्भोलवकदलितः क्षौद्रहविषा-
वलीढो माषैकं दरयति समस्तं गदगणम् ॥ ५६२ ॥
जरां वर्षैकेण क्षपयति च पुष्टिं वितनुते
तनौ तेजस्कारं रमयति वधूनामपि शतम्।
रसः श्रीमान्मृत्युञ्जय इति गिरीशेन कथितः
प्रभावं को वाऽन्यः कथयितुमपारं प्रभवति ॥ ५६३ ॥

वलिरित्यादि। वलिः-शुद्धगन्धकः, सूतः-अष्टसंस्कारितः शुद्धपारदस्तदभावे हिङ्गुलाकृष्टपारदो ग्रहीतव्यः। निम्बूरसविमृदितः शुष्कश्च सिकताऽह्वये यन्त्रे भस्मरससिन्दूरं कृत्वा तत्सम रविः-ताम्रभस्म, कणा-पिप्पली, टङ्कणम्, एषां रजः पूर्वोक्ते रससिन्दूरे मेलयित्वा ततस्त्रिघस्रं-दिनत्रयं यावत् लुङ्गाम्भोलवकदलितः-मातुलुङ्गाम्भसो लवैः-कणैः सह कदलितः[1]-पिष्ट, मातुलुङ्गद्रवं कणशो दत्त्वा त्रिदिनं मर्दित इत्यर्थः।

अत्राऽयं सारः-निम्बूरसविमृदितशुद्धपारदगन्धककज्जली काचकूप्यां निवेश्य सिकतायन्त्रे। तल्लक्षणं यथा-'भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके। कूपिकाकण्ठपर्यन्तं वालुकाभिश्च पूरिते॥ भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते। वालुकायन्त्रसंज्ञं हि यन्त्रमेतद् बुधैः स्मृतम्॥' इति। रससिन्दूरं सम्पाद्य तत्तुल्यं ताम्रादिद्रव्यं दत्त्वा पुनर्निम्बूद्रवेण दिनत्रयं मर्दयेत्। एष मृत्युञ्जयनामा रसो भवति। रसोऽसौ माषैकं यावत् क्षौद्रहविषा विषमभागेनावलीढः-भक्षितः समस्तं गदगणं रोगसमूहं दरयति-नाशयति। वर्षैकेण यावद्भक्षितः स पथ्येन जरां क्षपयति-अपनयति। पुष्टिं च वितनुते-विस्तारयति। तनौ शरीरे तेजस्कारं वितनुते। तथा वधूनामपि शतं रमयति। असौ श्रीमान् रसो मृत्युञ्जय इति नाम्ना गिरीशेन कथितः। एवम्भूतस्यास्य अपारं प्रभावं शिवातिरिक्तः कथयितुं को वा प्रभवति न कोऽपीत्यर्थः॥ ५६२-५६३ ॥

मृत्युञ्जय रस—शुद्धगन्धक और पारे को समभाग लेकर निम्बू रस से मर्दन कर सुखा ले, फिर कपरोटी की हुई आतशी शीशी में भरकर वालुका यन्त्र में भस्म बनावे, तत्पश्चात् समभाग ताम्रभस्म, पीपल और सुहागा का फूला मिलाकर ३ दिन तक बिजोरे निम्बू के रस में घोटकर एक मासे की मात्रा में घृत और शहद के साथ चाटे। इसके सेवन से समस्त रोग नष्ट होते हैं। एक वर्ष लगातार इसके सेवन करने से यह बुढापा को दूर कर शरीर को पुष्ट, तेजस्वी तथा सौ

---

१ ग्रन्थकारः—लुङ्गाम्भोलवकदलित इति मातुलुङ्गद्रवं कणशो दत्त्वा त्रिदिनं मर्दयेदित्यर्थः।

स्त्रियों के साथ रमण करने की शक्ति प्रदान करता है। यह मृत्युञ्जय रस [illegible] हुआ है इसके अपार प्रभाव को दूसरा नहीं जान सकता ॥ ५६२-५६३ ॥

अथानन्दसूतरसः—

शुद्धं रसं समविषं प्रहरं विमर्द्य
तद्गोलकं कनकचारुफले निधाय ।
दोलागतं पच दिने विषमुष्टितोये
प्रक्षाल्य तत्पुनरपीह तथा क्रियात्तम् ॥ ५६४ ॥
तत्सूतके गिरिशलोचनयुग्मगन्धं
युक्त्याऽवजार्य कुरु भस्म समं च तस्य ।
वैक्रान्तभस्म जयपालनवांशकार्धं
सर्वं विषं द्विगुणितं मृदितं च खल्वे ॥ ५६५ ॥
घस्रत्रयं कनकभृङ्गरसेन गाढ-
मावेश्य भाजनतले विषधूपभाजि ।
भृङ्गद्रवेण शिथिलं लघुकाचकूप्या-
मापूर्य रुद्धवदनं सिकताख्ययन्त्रे ॥ ५६६ ॥
तां वासरार्धमुपदीप्य निसर्गशीतां
दृष्ट्वा विचूर्ण्य गदशालिषु गालिमात्रम् ।
आनन्दसूतमखिलामयकुम्भिसिंहं
गद्याणकार्धसितया सह देहि पश्चात् ॥ ५६७ ॥
रोगानुरूपमनुपानमपि प्रकामं
क्षोणीभुजां प्रचुरपूजनमाप्नुहि त्वम् ।
कीर्त्या दिशो धवलय स्फुरदिन्दुकान्त्या
वैद्येश्वरेति विरुदं भज वैद्यराज ॥ ५६८ ॥

शुद्धमित्यादि । हे वैद्यराज, शुद्धं रसं, समविषं-विषसमानभाग, धत्तूररसे प्रहर यावद्विमर्द्य गोलकं विदध्यात् । तद्गोलकं च कनकचारुफले, निधाय विषमुष्टितोये-कुपीलो· स्वरसे क्वाथे वा दोलागत विधिना दिनं यावत् पच । ततस्तत्प्रक्षाल्य जलेन । पुनरपीह तथा द्विवारं पूर्ववत् समस्तं कर्म प्रागुक्तविधिना द्वितीयवारं विदध्यादिति भावः । एवं संस्कृते पारदे गिरिशलोचनयुग्म षड्गुणं गन्धकं दत्वा युक्त्या काचकूप्यादौ स्थापनविधा- नेनावजार्य भस्म कुरु । पुनस्तस्य पारदस्य भस्मसमं, वैक्रान्तभस्म, जयपालं नवांशकार्ध- सार्धचतुर्भाग सर्वं-समस्तौषधिभिर्द्विगुणितं[1] विष-वत्सनाभाख्यं च खल्वे कनक-धत्तूर, भृङ्गम्, अनयोर्द्वयो रसेन घस्रत्रयं यावद्गाढं मृदितम् । तदनु सर्वं लघुकाचकूप्यामापूर्य संरुद्ध्य च भृङ्गद्रवेण शिथिलं यथा स्यात्तथा लिप्ते विषधूपभाजि-विषधूमेन सम्यग्धूपिते

१ ग्रन्थकार'—तथा द्विवारमिति पूर्ववदखिल द्वि कुर्यादिति भाव. । गिरिशलोचनयुग्मेति षड्गुणगन्धक, युक्त्येति काचकूप्युदरे ॥ इत्यानन्दसूतरस ॥

भाजनतले निधाय 'रुद्धवसनम्' इत्यत्र 'रुद्धवदनमि'ति पाठान्तरमुपलभ्यते। वालुकाभिः कूपिकाकण्ठपर्यन्तमापूर्य तां-कूपीं वासरार्धं यावत्तदधोऽग्निमुपदीप्य-प्रज्वाल्य, निसर्गशीतां दृष्ट्वा तद्द्रव्यमादाय विचूर्ण्य ततो गदशालिषु-रोगयुक्तेषु, शालिमात्रं-तण्डुलोन्मितमानन्दसूतमखिलामयकुम्भिसिंहम्-अखिलं समस्तमामयो-रोगः स एव कुम्भी-गजस्तदर्थं यथा सिंह-केसरी तद्वत्तं गद्याणकार्धसितया-पणमापकपरिमितशर्करया सह देहि। अस्यानुपानमपि रोगानुरूपं क्षोणीभुजां राज्ञां प्रकाम-यथेच्छ प्रचुरपूजनं त्वमाप्नुहि। स्फुरदिन्दुकान्त्या स्फुरच्चन्द्रशोभया दशदिशो धवलय तथा वैद्येश्वरेति विरुद-पदवीं भज॥ ५६४-५६८॥

आनन्दसूत रस—शुद्ध पारा उसके समभाग शुद्ध वच्छनाग दोनों को एक प्रहर मर्दन कर धतूरे के उत्तम फल में भरकर दोलायन्त्र-विधि से कुचले के रस में पकावें, तत्पश्चात् यन्त्र से निकालकर धोवे और फिर उक्त विधि से दो बार पकावे। इसके बाद उस पारे में षड्गुण गन्धक जारण करे और उसके बराबर वैक्रान्तभस्म के ४३ भाग जमालगोटा तथा सबसे दुगुना शुद्ध वच्छनाग डालकर ३ दिन तक धतूरा और भागरे के रस से भलीभाँति मर्दन कर विष की धूनी दिये हुए पात्र में रखकर भागरे के रस से ढालकर आतसी शीशी में भरकर मुख बन्द कर दे और वालुकायन्त्र में एक दिन पाक करे, स्वाङ्गशीतल होने पर चूर्ण करके शीशी में भर ले। आवश्यकता होने पर समस्त रोगों में एक चावल की मात्रा से ३ माशे मिश्री के साथ दे। यह आनन्दसूत सपूर्ण रोगरूपी हाथियों के लिए सिंह स्वरूप है। इसका अनुपान रोगानुसार है। इसके प्रयोग से वैद्य राजाओं से पूजा प्राप्त करता है॥ ५६४-५६८॥

अथ प्राणिकल्पद्रुमगोलरसः—

सूतं गन्धं कान्तपाषाणमिश्रं ब्राह्मैर्बीजैर्मर्दयेदेकघस्रम्।
गोलं कृत्वा टङ्कणेन प्रवेष्ट्य पश्चान्मृत्स्नागोमयाभ्यां धमेत्तम्॥५६९॥
शुष्के यन्त्रे सत्त्वपातप्रधाने किट्टे सूतो वद्धतामेति नूनम्।
वद्धं पश्चात्क्षारकाचप्रयोगाद्धेम्ना तुल्यं सूतमावर्तयेत्तु॥५७०॥
वक्त्रे खोटः स्थापितो वत्सरार्धं रोगान् सर्वान् हन्ति सौख्यं करोति।
यद्वा दुग्धे गोलकं पाचयित्वा दद्याद् दुग्धं पिप्पलीभिः क्षये तत्॥५७१॥
लोहे पात्रे पाचयित्वा तु देयं शुष्के पाण्डौ कामलापित्तरोगे।
वाते गोलं व्योषवातारितैले पक्त्वा तैलं गन्धयुक्तं ददीत॥५७२॥
भार्गीमुण्डीकासमर्दाटरूषद्रावैर्गोलं पाचयेच्छ्लेष्मनुत्त्यै।
कासे श्वासे तं च दद्यात्कषायं माध्वीकाक्तं पिप्पलीचूर्णयुक्तम्॥५७३॥
यस्मिन् रोगे यः कषायोऽस्ति चोक्तस्तस्मिन् गोलं पाचयित्वा कषाये।
दद्यात्तत्तद्रोगनाशाय पथ्यं तत्तद्रोगे कीर्तितं यत्तदेव।
उक्तो गोलः प्राणिकल्पद्रुमोऽयं पूजां कृत्वा योजयेद्भक्तियोगात्॥५७४॥
युक्त्या प्रागग्निसहत्वं कृत्वा पश्चाद्धमेदित्यर्थः।

सूतमित्यादि। सूत शुद्धम्, शुद्ध गन्धक च अत्र द्वयो साम्यता। कान्तपाषाणमिश्र ब्राह्मैर्बीजैः-पालाशबीजैरेकघस्र यावन्मर्दयेज्जलेनेति शेष। गोलं कृत्वा टङ्कणेन आवेष्टय पुनश्च मृत्स्नागोमयाभ्या च लेप कुर्याच्छुष्के सति तं गोलकं सत्त्वपातप्रधाने

यन्त्रे धमेत् युक्त्या प्रागग्निसहत्वं कृत्वा पश्चाद्धमेदित्यर्थः। एवं ध्मातः किट्टे-किट्टतामनुगते सति सूते नूनमिति निश्चयेन बद्धतां गुटिकास्वरूपमेति, पश्चात् सूत क्षारकाचप्रयोगात् संद्राव्य हेम्ना तुल्यं-समसुवर्णपत्रमावर्तयेत्। पुनरेवमावर्तित. खोटस्वरूपो वत्सरार्धं यावद्वक्त्रे स्थापितः सन् सर्वान् रोगान् हन्ति तथा सौख्यं च करोति। यद्वा गोलकं पिप्पलीभिः सह दुग्धे पाचयित्वा तत् दुग्ध क्षये दद्यात्, पुन. शुष्के-खरीभूते पाण्डौ कुम्भकामलाख्ये, कामलापित्तरोगे 'कामला बहुपित्तैषे'ति वचनात्। लौहे पात्रे गोलं दुग्धमध्ये प्रक्षिप्य पाचयित्वा च देयम्। वाते-वातव्याधौ व्योपवातारितैले-त्रिकटुकल्कसिद्धे एरण्डतैले गोलं पक्त्वा तत्तैलं गन्धयुक्त-शुद्धगन्धकमिश्रितं दद्दीत। श्लेष्मनुत्यै भार्गी-भारङ्गीति लोके, मुण्डी-गोरखमुण्डी, कासमर्दः, आटरूप.-वृषक., एषां द्रावैः-स्वरसैः क्वाथैर्वा गोलक पाचयेत्तज्जल च दद्यादिति शेष.। तं-भार्ग्यादिकषायं कफनाशार्थं तथा माध्वीकाक्तं-मधुसहितं पिप्पलीचूर्णयुक्त च श्वासे कासे च दद्यात्। यस्मिन् रोगे यः कषायश्चोक्तोऽस्ति तस्मिन् कषाये गोलं पाचयित्वा तत्तद्रोगनाशाय दद्यात्। तत्तद्रोगे यत् यत् पथ्यं कीर्तित तत्तदेव दद्याद्। अयं प्राणिकल्पद्रुमनामा गोल उक्तः स शिवस्य भक्तियोगात् पूजा कृत्वा सर्वत्र योजयेत्। एरण्डतैलमात्रा प्रकृत्यनुसार प्रकल्पनीया। यथा-'उत्तमस्य पल मात्रा त्रिभिश्चाक्षैश्च मध्यमे। जघन्यस्य पलार्द्धेन स्नेहक्काथ्यौषधेषु च॥' इति। शुद्धगन्धकज द्वित्रिमाषक मुखे प्रक्षिप्य तैलमिद दुग्धमिश्रं पेयमन्यथा वमनभयम्। रसस्यास्य यद्यपि व्याख्यान विस्तरशो विहितमेव तथापि चिकित्सकैरेव तद्यथायथविधिर्बोध्य.॥ ५६९-५७४॥

प्राणिकल्पद्रुमगोल रस-शुद्धपारा, शुद्ध गन्धक और शुद्ध कान्तपाषाण भस्म इन सब को समभाग लेकर पलाशके बीजों से एक दिन मर्दन करके गोला बनावे और ऊपर से सोहागा लपेट दे, तत्पश्चात् मिट्टी और गोबरका लेपकर धूप में सुखावे और सत्त्वपातन प्रधान यन्त्र में रखकर धमन करे, इस प्रकार धमन करने पर पारा किट्टता को प्राप्त हो कर बद्धस्वरूप हो जाता है। फिर इस पारे को क्षार तथा काचके प्रयोग से द्रावण कर समभाग सुवर्ण के पत्रों (वर्कों) में मिला दे। बद्ध पारे को छ महीने तक मुँह में रखने से सपूर्ण रोगों को नष्ट करके सौख्य-प्रदान करता है। अथवा बद्ध पारे की गोली को दूध में पीपल के साथ पकाकर क्षय रोग में देना। लोहे के पात्रमें दूध भरकर उसमें गोले को पकाना और वह दूध कुम्भकामला में देना, सोंठ, मिरच, पीपल सहित एरण्ड के तेल में पकाकर वह तेल गन्धक मिलाकर वात रोग में हितकर है। भारंगी, गोरखमुण्डी, कसोंदी और अडूसा इनके रसमें गोले को पकाकर कफनाशार्थ प्रयोग करना तथा इसी कषाय को शहद और पीपल के चूर्णके साथ खासी और श्वास में देना। इतना ही नहीं, किन्तु जिस रोग में जो कषाय कहा हो उसमें गोले को पकाकर उस रोग के नाशार्थ देना और पथ्य भी रोगानुसार ही देना चाहिए॥ ५६९-५७४॥

अथ त्रिनेत्ररस.—

> रसगन्धकताम्राणि [1]सिन्दुवाररसैर्दिनम्।
> मर्दयेदातपे पश्चाद्वालुकायन्त्रमध्यगम्॥ ५७५॥
> रुद्ध्वा मूषागतं यामत्रयं तीव्राग्निना पचेत्।
> तद्गुञ्जा सर्वरोगेषु पर्णखण्डकया सह॥ ५७६॥

---

१. सिन्दुवारो 'निर्गुण्डी' इति भाषायाम्। इति ग्रन्थकारः।

दातव्या देहसिद्ध्यर्थं पुष्टिवीर्यबलाय च।

रसेत्यादि। रसगन्धकताम्राणि समानभागानि गृहीत्वा सिन्दुवाररसैः-निर्गुण्डीस्वरसैर्दिनं यावदातपे मर्दयेत्। पश्चात् मूषामध्ये रुद्ध्वा वालुकायन्त्रमध्ये यामत्रयं तीव्राग्निना पचेत्। एवं सिद्धे रसे तद्गुञ्जापरिमिता मात्रा पर्णखण्डिकया सह सर्वरोगेषु दातव्या। देहसिद्ध्यर्थं, पुष्टिवीर्यबलाय च। क्वचित् पुस्तके 'रसोऽयं हेमताराभ्यामपि सिध्यति कन्यया' इत्यधिकः पाठः समुपलभ्यते ॥ ५७५-५७६ ॥

त्रिनेत्र रस—शुद्ध पारा, शुद्ध गन्धक और ताम्रभस्म इनको समान भाग लेकर निर्गुण्डी के रस से धूप में रख कर एक दिन घोटे, तत्पश्चात् मूषा में बन्द करके वालुका यन्त्र में तीन प्रहर तीक्ष्णाग्नि से पाक करे, इसकी एक रत्ती की मात्रा है। नागर पान के साथ समस्त रोगों में देहसिद्धि और शरीर-पुष्टि के लिए तथा बल-वीर्य के लिए सेवन करे ॥ ५७५-५७६ ॥

अथ शार्दूलरसः—

रसस्य द्विगुणं गन्धं शुद्धं सम्मर्दयेद्दिनम् ॥ ५७७ ॥
[1]अष्टलोहं तु प्रत्येकं मृतं सूतसमं क्षिपेत्।
ब्राह्मी जया च निर्गुण्डी विषमुष्टिः पुनर्नवा ॥ ५७८ ॥
नीलिका गिरिकर्ण्यर्ककृष्णधत्तूरकं यवाः।
वासा च काकमाची च द्रवैरासां विमर्दयेत् ॥ ५७९ ॥
गुञ्जात्रयं चतुष्कं वा सर्वरोगेषु योजयेत्।
रोगोक्तमनुपानं वा कवोष्णं वा जलं पिबेत् ॥ ५८० ॥

रसस्येत्यादि। रसस्य द्विगुणं शुद्धं गन्धकं खल्वे दत्त्वा दिनं यावत् सम्मर्दयेत् कज्जलीं कुर्यादित्यर्थः। पुनश्च मृतमष्टलौह-स्वर्णताररताम्रतीक्ष्णनागवङ्गरीतिकांस्यभेदभिन्नं प्रत्येकं सूतसमं क्षिपेत्। नन्वष्टलोहशब्देनैवाष्टलौहानां बोधो भवति, किमर्थं पुनः प्रतिलोहशब्दग्रहणम्? तदुच्यते लौहं लौहं प्रतीत्यर्थेनैवाष्टलौहानां भिन्नत्वेन पारदतुल्यमानमवगम्यते, अन्यथाऽष्टानां लौहानां समुदितमानं भवेदिति तात्पर्यम्। ब्राह्मी, जया-अग्निमन्थः, निर्गुण्डी-सिन्दुवारः, विषमुष्टिः-कुपीलु, पुनर्नवा, नीलिका, तदभावे सनामुकीति केचित्। गिरिकर्णी, अर्कः, कृष्णधत्तूरक, यवा-इन्द्रयवा, वासा-आटरूष, काकमाची च चकारत्रयं समुच्चयार्थं, आसामोषधीनां द्रवैर्विमर्दयेत्। गुञ्जात्रयं गुञ्जाचतुष्टयं वा सर्वरोगेषु योजयेत्। अनुपानं वा रोगोक्त-प्रतिरोगं यादृशमनुपानं कथितं तादृशं पिबेत्। अथवा कवोष्णं जलं पिबेत् ॥ ५७७-५८० ॥

शार्दूल रस—शुद्ध पारा एक भाग, शुद्ध गन्धक दो भाग लेकर एक दिन मर्दन कर कज्जली करे, तत्पश्चात् सुवर्ण, चाँदी, ताँबा, लोह, सीसा, वङ्ग, पीतल और काँसे की भस्म प्रत्येक बराबर डालकर ब्राह्मी, अरणी, निर्गुण्डी, कुचला, पुनर्नवा, नील अथवा सनायपत्ती, विष्णुकान्ता, आक, काला धत्तूरा, जौ, अडूसा और मकोय इनके रसों की भावना देकर ३-४ रत्ती की मात्रा से सम्पूर्ण रोगों में प्रयोग करे। अनुपान रोगानुसार अथवा किंचित् उष्ण जल पीवे ॥ ५७७-५८० ॥

अथामृतार्णवरसः—

सूतभस्म चतुर्भागं लोहभस्म तथाष्टकम्।

---

१. अष्टलोह स्वर्णादि। इति ग्रन्थकार.।

ऊर्ध्वं पयोऽग्निमधरे विनिधाय धीराः
सिद्धिं समग्रमतुलां स्वकरे कुरुध्वम् ॥ ५९० ॥

अष्टांशेत्यादि। हे धीराः रसशास्त्रकोविदाः, शिखिमूषिकायाम्—अग्नौ मूषायाम्, अष्टांशहेमरजते—अष्टमांशं स्वर्णं रजतं च 'अष्टांशहेमरजते' इत्यत्र 'अष्टांशकेऽग्नि हरते' इति पाठान्तरम्। तस्मिन् षड्गुणबलिं क्रमशः सञ्जार्य चाधिकं—शतगुणपर्यन्तमिति भावः। केन विधिना जारयित्वा इत्यत आह—ऊर्ध्वं पयः अधरेऽग्निं विनिधाय क्रमेण षड्गुणगन्धकमितोऽप्यधिकं वा जार्यं समग्रम्। यथोक्तं प्राक्—अधस्तात् उपर्यपि इत्यादि। तथाऽतुलां अपरिमितां सिद्धिं रसायनसिद्धिं धातुवादसिद्धिं च स्वकरे कुरुध्वम्। अष्टांशेत्युपलक्षणेन चतुर्थांशसमांशयोरपि ग्रहणम्। रसायनार्थं (शरीरसिद्ध्यै) अष्टमांशसुवर्णजीर्णे सति रसे प्रथमं गन्धकस्य पञ्चगुणान् जारयित्वा पश्चाच्छेषं चैकगुणं काचघटिकायां सिकतायन्त्रेण चन्द्रोदयरीत्या साधयेत् धातुवादे च विशेषतः शतगुणाधिकं गन्धकं जारयेच्छेषं सर्वं पूर्ववदिति भावः ॥ ५९० ॥

सिद्धलक्ष्मीश्वर रस—पारे से आठवां भाग सुवर्ण और चांदी को मूषा में रखकर अग्नि में जारण करना, इसके बाद क्रमशः षड्गुण अथवा अधिक शतगुणतक पूर्वोक्त विधि से गन्धक जारण करना। जारणविधि यह है कि पारे के ऊपर जल और नीचे अग्नि देकर पूर्वोक्त रीति से सम्पूर्ण गन्धक जारण करे तो वह पारा अतुल सिद्धिप्रद होता है ॥ ५९० ॥

अथ चतुर्मुखो रसः—

रसगन्धकलोहाभ्रं समं सूतार्धहेम च।
सर्वं खल्वतले क्षिप्त्वा कन्यास्वरसमर्दितम् ॥ ५९१ ॥
आवेष्ट्यैरण्डपत्रैस्तु धान्यराशौ दिनत्रयम्।
संस्थाप्य च तदुद्धृत्य सर्वरोगेषु योजयेत् ॥ ५९२ ॥
एतद्रसायनं श्रेष्ठं त्रिफलामधुसंयुतम्।
तद्यथाग्निबलं खादेद्वलीपलितनाशनम् ॥ ५९३ ॥
एकादशविधं शोषं कासं पञ्चविधं तथा।
कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ ५९४ ॥
शूलं श्वासं च मन्दाग्निं हिक्कां चैवाम्लपित्तकम्।
आढ्यवातं व्रणान् सर्वान् विसर्पं विद्रधिं तथा ॥ ५९५ ॥
अपस्मारं ग्रहोन्मादान् सर्वार्शांसि त्वगामयान्।
क्रमेण शीलितो हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ५९६ ॥
पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारणम्।
चतुर्मुखेन देवेन कृष्णात्रेयाय सूचितम् ॥ ५९७ ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायमाधवविरचितायुर्वेदप्रकाशे सूतसाधनाध्यायः प्रथमः समाप्तः ॥ १ ॥



रसेत्यादि। रसं शुद्धं, शुद्धगन्धकं, लोहभस्म, अभ्रकभस्म प्रत्येकं समम्। हेम च सूताङ्घ्रि-पारदाच्चतुर्थांश ग्रहीतव्यम्। सर्वं रसादिकं खल्वतले क्षिप्त्वा कन्यास्वरस मर्दितं कृत्वा क्वचित्पुस्तके-'त्रिफलातुलसीब्राह्मीरसैश्चानु विमर्दयेत्' इत्यधिकः पाठः॥ ततश्चक्रिका विधाय संशोष्य च पुनरेरण्डपत्रैरावेष्ट्य तदुपरि सूत्रेण च बद्ध्वा धान्यराशौ दिनत्रय यावत् संस्थाप्य तदुद्धृत्य च रक्तिकाद्वयादिक्रमेण यथाग्निबल त्रिफलामधुसयुतं रसायन सर्वरोगेषु योजयेत्। तत्पूर्वोक्त रसायनमहणोऽपि भक्षितश्चेद्वलीपलितनाशनं-त्वक्सङ्कोच केशश्वेतत्वं च नाशयति। एकादशविध शोष-क्षयरोग, पञ्चविध कासं, तथाष्टा-दशविधं कुष्ठं, पाण्डुरोगान् पञ्चविधान्, विंशतिप्रमेहरोगान्, शूलमष्टप्रकारक, श्वासं पञ्चविधं, मन्दाग्नि त्रिविधं, हिक्का, पञ्चविधाम्, अम्लपित्त गतिभेदेन त्रिविधम्, आढ्यवातम्-ऊरुस्तम्भरोग, सर्वान् व्रणान्-शरीरसद्योनाडीव्रणाख्यान्, विसर्पं, विद्रधिं षड्विधा, तथा-पस्मार चतुर्विध, ग्रहोन्मादान्-ग्रहजनितोन्मादव्याधीन्, सर्वार्शांसि, त्वगामयान्, क्रमेण-वर्धनह्रासनक्रमेण शीलितोऽसौ रस इन्द्राशनि -वज्रो वृक्षं यथा हन्ति तथा पूर्व-प्रतिपादितान् सर्वरोगानेष रसो नाशयति। तथा च पौष्टिक, बल्यम्, आयुष्यं, पुत्रप्रसव-कारण च। चतुर्मुखेन देवेन ब्रह्मणा कृष्णात्रेयाय सूचितम्। अस्मिन्रसे त्रिफलाचूर्णं माषक-परिमित मधु च मिश्रणोपयोगीति दिक्॥ ५९१-५९७॥

श्रीसूर्याङ्घ्रिसरोजसक्तमनसः सारल्यभावाम्बुधे'
श्रीकेदारबुधस्य तस्य तनयेनायं प्रबन्धो मुदा।
व्याख्यातो गुलराजमिश्रविदुषा विद्वज्जनानन्दकृ-
दध्याय प्रथमोऽगमत्सुविरतिं स्वर्गौकसा भाषया॥

चतुर्मुख रस-शुद्ध पारा, शुद्ध गन्धक, लोहभस्म अभ्रकभस्म, प्रत्येक समभाग और पारे से चौथाई भाग सुवर्ण इन सबको खरल में डालकर ग्वारपाठे के रस में मर्दन कर गोला बनावे उस गोले को एरण्ट के पत्तों में लपेट कर तीन दिन तक धान्यराशि में रखे। तीन दिन के बाद निकाल कर इसका सम्पूर्ण रोग में प्रयोग करे। यह उत्तम रसायन है। इसको जठराग्नि और बल देखकर त्रिफला एव शहद के साथ सेवन करे। यह शरीर की झुर्रियाँ और बाल की सफेदी को हरता है तथा ग्यारह प्रकार का क्षय, पाच प्रकार की खाँसी, अठारह प्रकार के कुष्ठ, पाच प्रकार के पाण्डु, बीस प्रकार के प्रमेह तथैव शूलरोग, श्वास, मन्दाग्नि, हिचकी, अम्लपित्त, मूढवात, सभी प्रकार के व्रण, विसर्प, विद्रधि, अपस्मार, ग्रहोन्माद, सब प्रकार के बवासीर और त्वचा के रोग इन सबको क्रमश सेवन करने पर नष्ट कर देता है, जैसे कि इन्द्र का वज्र वृक्ष को। यह प्रयोग शरीर में पुष्टि, बल और आयुष्य प्रदान करके पुत्रोत्पत्ति करने वाला है। यह रस भगवान् ब्रह्मा ने पुनर्वसु के प्रति कहा है॥ ५९१-५९७॥

इत्यायुर्वेदप्रकाशे सुस्पष्टार्थप्रकाशिनी हिन्दीटीकाया सूतसाधनाध्याय. प्रथम समाप्त।



ततो देवगणैरुक्तं गन्धकाख्यो भवत्वयम् ॥ ६ ॥
रसस्य बन्धनार्थाय जारणाय भवत्वयम् ।
ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्त्विति ॥ ७ ॥
इत्ययं गन्धको नाम विख्यातः क्षितिमण्डले ।
बलिना सेवितः पूर्वं प्रभूतबलहेतवे ॥ ८ ॥
वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता ।
वसा गन्धकगन्धाढ्या सर्वतो निःसृता तनोः ॥ ९ ॥
गन्धकत्वं च संप्राप्ता तस्माद्बलिवसा स्मृता ।

श्वेतद्वीप इत्यादि । पुरा क्षीरपयोनिधेः—क्षीरसमुद्रस्य श्वेतसमुद्रनाम्ना संप्रति सङ्केतितस्य तीरे इदानीं सिसल्यादिदेश इति कथयितुं पार्यते । तत्र सखिभिः सार्धं क्रीडन्त्याः देव्याः पार्वत्याः रजः—आर्तवं प्राभवत् । मूलपाठे 'अभवन्' इति पाठोऽरमणीय इति चिन्त्यम् । कर्तुरेकवचनत्वात्क्रियाया अप्येकवचनत्वमिति राद्धान्तः । तत 'अभवदि'त्युचितः पाठः । बहुलं तद्रजोऽतीवसुगन्धि सुमनोहरं च तेन रजसा युक्तं दुकूलं—वस्त्रं क्षीरसागरे स्नातायाः यत्सखिभिर्धौतं तत्र क्षीराब्धौ पार्वत्यास्तद्रजो गन्धकं जातम् । पुनश्च क्षीराब्धिमथनेनैतद्गन्धकम्, अमृतेन सह समुत्पन्नं किं कुर्वन् सन् निजगन्धेन तान् समुद्रमन्थनोद्यतान् सर्वान् देवदानवान् हर्षयन् सन् । क्वचित्पुस्तके 'हर्षयन् देवदानवान्' इत्यत्र 'हर्षयामास दानवान्' इति पाठान्तरम् । ततो देवगणैर'य गन्धकाख्यो जगति प्रसिद्धो भवतु' इत्युक्तम् । किमर्थम्, अयं रसस्य बन्धनार्थाय जारणाय च । ये रसायनात्मका गुणाः पारदे प्रोक्ताः ते चैवात्र—गन्धकेऽपि भवन्तु इत्येवं प्रकारेण सुप्रसन्ना देवगणाः प्रोचुः । इत्ययं गन्धकः क्षितिमण्डले विख्यातः । पूर्वमयं गन्धको बलिना, यदर्थं भगवतः श्रीविष्णोर्वामनावतारः समभूत्तेन प्रभूतबलहेतवे सेवित आसीदिति शेषः । पुनश्च भक्षितः स एव गन्धकस्तस्य—बलेः सर्वतस्तनोः शरीरतो वसा तैलरूपा निःसृता गन्धकगन्धाढ्या कस्मात्, तन्मुखज्वालया—वासुकि—मुखोष्मणा द्रुता—संगलिता, किं कुर्वतस्तस्य बलेः वासुकिनामानं सर्पं कर्षतः पुनश्च सैव गन्धकत्वं संप्राप्ता तस्मात्कारणादस्यैवाख्या बलिवसेत्यपि स्मृता, एतेन ज्ञायते किंचास्य बलिवसाऽपि पर्याय इति भावः ॥ ३–९ ॥

गन्धक की उत्पत्ति और नाम—भगवान् शिव कहते हैं कि पहले श्रीमद्भागवतोक्त क्षीरसमुद्र के निकट अपनी सहेलियों सहित खेलती हुई पार्वती जी के रजःस्राव हुआ । वह रज अतीव सुगन्धित एवं मनोहर था । उस रज से जो वस्त्र भीगा था उस वस्त्र को पार्वती जी के समुद्र में स्नान करने के पश्चात् सखियों ने क्षीरसागर में धो डाला, वही रज घुल कर समुद्र के जल में मिश्रित हुआ था गन्धक बन गया । जब देव-दानवों ने अमृत-प्राप्ति के लिए मिलकर समुद्र का मन्थन किया तब यह गन्धक भी समुद्र मन्थनावसर पर अमृत के साथ अपनी सुगन्धि से सम्पूर्ण देवताओं और राक्षसों को प्रसन्न करता हुआ निकला । उस समय देवताओं ने प्रसन्न होकर कहा कि यह पारे को बद्ध करने और जारण करने के लिये जगत् में गन्धक नाम से विख्यात होगा । जो गुण पारे में कहे हैं वे गन्धक में भी होंगे इसलिए यह गन्धक नाम से प्रसिद्ध हुआ । सर्वप्रथम इसे राजा बलि ने बलप्राप्त्यर्थं सेवन किया था अत उसका नाम 'बलिवसा' ऐसा भी हुआ

**वक्तव्य**—गन्धक के ऊपर दिये हुए वर्णन में यद्यपि यथार्थता है किन्तु भाषा का और वर्णन-शैली का आलङ्कारिक मोड होने से आधुनिक विचार के लोगों को जरा अटपटासा प्रतीत होता है। भावों की दूरगामी दृष्टि भी विषय के अवगाहन में अवकुण्ठित होती है अत. उसका स्पष्ट स्वरूप जो ऊपर जिस दृष्टिकोण से दिया है उसका विवेचन किया जाता है।

श्वेतद्वीप में गन्धक की उत्पत्ति सर्वप्रथम हुई है यह बात ऊपर कही गई है। श्वेतद्वीप इटली के दक्षिण में जो सिसिली द्वीप है समवत यही वह द्वीप है। वहाँ के लोग प्रायश बहुत ही अधिक गोरे होते हैं और इसीलिए इसे श्वेतद्वीप यह सज्ञा उपलब्ध होती है। यह स्थान अत्यन्त सुन्दर और मनोहर है। ऐसी धारणा है कि इस समुद्र-तट में अनेक रत्न और खनिज धातुओं का सग्रह है। समव है उस समय यह स्थान अतीव रम्य और मनमोहक रहा हो। वहाँ के विभिन्न जाति के वृक्ष, लता, गुल्म और वेणु रहे हों, उनमें विचरण करने वाले वायु के सघर्ष से अनेक प्रकार का ध्वनियों का उद्गम सुन्दर, मधुर और कर्णप्रिय होने से वहाँ के लोगों को यह अनुभव हुआ हो कि गायन, वादन और नृत्य का क्या ही अनुपम समा बँधा हुआ है और इससे उनको महान् हर्ष हुआ हो, ऐसी स्थिति में समीप ही कहीं ज्वालामुखी का स्फोट हुआ और उससे भूगर्भ द्वारा धातु-उपधातुओं से युक्त गर्म पानी का मनोहर लाल रङ्ग का रमणीक झरना उद्भूत होकर बहना प्रारम हुआ। गन्धक का खनिज और हायड्रोग्यास ये दोनों पानी में मिलने पर तथा भूगर्भ की गर्मी से गन्धक के लाल होने से झरने का वह पानी लाल रग का और गर्म बहना प्रारभ हुआ। गम और लाल रग पानी का वह झरना नाचे, ऊपर, आडे, तिर्छे सभी दिशाओं में चलत हुये अन्त में समुद्र में जा कर मिश्रित हुआ। यह झरना जहाँ जहाँ स बहते हुए आगे बढ़ा उस उस भूभाग को जमीन लाल हो गइ। जिस भाग से वह झरना बहा उसम जो नाले, गड्ढे अवरोध के स्थान थे उनमें झरने के साथ बहने वाले गन्धक का अधिकाश भाग यत्र-तत्र रुक गया और शेष गन्धक का सब भाग झरने के साथ समुद्र में पहुच गया। समुद्र में पहुचने पर उसमें रहने वाला हायड्रोजन वायु आक्सीजन स मिलकर उसका पानी होगया और गन्धक अलग होकर समुद्र के नीचे बैठ गया। यही हेतु है कि गन्धक खदान और समुद्र भाग दोनों से मिलता है।

गन्धक का ज्ञान लोगों को बहुत काल से रहा है। सस्कृत में शुल्वारि नाम गन्धक का है। शुल्वारि का अर्थ है ताम्र का शत्रु ताम्र मारण म गन्धक विशेष उपयोगी है। ताम्रपत्रों पर गन्धक का लेप करके उसको अग्नि में तपाते रहने स भस्म हो जाता है। गन्धक के द्वारा ताम्र का भस्म शीघ्र होता है अत एव इसे शुल्वारि कहा है। अग्रेजी में गन्धक को सल्फर कहते है अग्रेजी का यह सल्फर शुल्वारि का ही अपभ्रश है अथवा उसी से निकला है। ( Sulphur ) का वैज्ञानिक सकेत ( S ) होता है।

गन्धक की उत्पत्ति श्वेत द्वीप ( सिसिली ) में मानी है। सप्रति भी ससार की ९० प्रतिशत गन्धक की माग की पूर्ति सिसिली से ही पूरी होती है। पहले गन्धक सिसिली से ही सर्वत्र भेजा जाता रहा है अन्यत्र कहीं नहीं मिलता था। आज तो बहुत से देशों में गन्धक उपलब्ध होता है किन्तु फिर भी स्वल्प प्रमाण में ही है। सिसिली से गन्धक लेना बन्द कर दिया जावे तो ससार में गन्धक का अभाव हो जावे और गन्धक का कार्य रुका पडा रहे अत आज भी गन्धक का व्यापार प्रायश- सिसिली और जापान द्वारा ही चलता है। कहने का तात्पर्य यह है कि सिसिली में ही गन्धक पर्याप्त मात्रा में होता है और उसी से सब देशों की पूर्ति होती है। यों अन्य कुछ धातुओं के साथ मिलित भी गन्धक मिलता है।

